# नूतनगृहप्रवेशहवनपद्धतिः।

विद्वच्छिरोमणिना श्रीमता पण्डितगोपालशर्म्मणा संस्कृतपाठशालामुख्याध्यापकेन
सिन्धुसक्करनिवासिना ग्रन्थेभ्यः समाहृत्य विरचिता।

तत्सूनु-गणेशविप्रकविना च संशोधिता।

सेयं

श्रीकृष्णदासात्मज-गंगाविष्णोः स्वकीये " लक्ष्मीवेंकटेश्वर " मुद्रणयन्त्रालये

रामचंद्र राघो इत्यनेन स्वाम्यर्थं

मुद्रिता प्रकाशिता च।

संवत् १९७०, शाके १८३५.

कल्याण-मुंबई.

# किञ्चिदत्र प्रस्तूयते ।

इह खलु जगति तं परब्रह्मपरमात्मानमानन्दकन्दमद्वितीयमखण्डमेकरसं कोटिशः प्रणमाम्यहं यत्कृपा-कटाक्षैरद्य किञ्चिदस्माकं वक्तुमवसरस्संप्राप्तश्चिरकालादीदृशीच्छा भूता यत्परोपकाराय किञ्चित्कार्यं कुर्य्याम्भगवदनुकम्पयेयङ्कलशस्थापनपद्धतिर्नूतनगृहप्रवेशहवनपद्धतिश्च स्वयुक्त्यनुसारेणोद्धृत्य ग्रन्थेभ्यः परोपकारकर्तुं मया विरचिता किञ्चान्यन्निदानमस्ति भूसुराः कर्म्मकाण्डपद्धतीर्न ददृश्च नोध्यापयामासु-रिति विनिश्चित्य ग्रन्थकर्तुमारेभे महानुभावा यद्यपि कर्म्मकाण्डग्रन्था लम्बोदरीवासिष्ठीकात्यायनीग्रह-शान्तिः प्रतिष्ठाप्रकाशप्रभृतयो बहवस्सन्ति तथापि नूतनगृहप्रवेशहवनक्रिया शृंखलाबद्धा कुत्रचिदपि न दृष्टा तदा मया गोपालशर्म्मणा संस्कृतपाठशालामुख्यापकेन सिन्धुसक्खरनिवासिना तत्तद्ग्रन्थेभ्यस्तां समाहृत्य ऋजुक्रियोपेता रचिता साम्प्रतं शास्त्रविधया सम्मतिश्चात्र श्रीमदुदासीनवर्य्यपं० कृष्णदासशास्त्रिणः पं० शीतलशर्म्मणश्च पं० होतचन्द्रशर्म्मणस्तथा सिन्धुशिकारपुरनिवासिविद्वद्वरपं० शिवारामात्मजपं० चेतनराम-शर्म्मणः गायनाचार्य्यपं० रावलशर्म्मणः पं० प्रह्लाददत्तशर्म्मणः पं० अम्बिकादत्तशर्म्मणश्च आशास्महे चैतद्विचारपूर्वकं शोधितेऽप्यस्मिन्ग्रन्थे कुत्रचिदज्ञानाद्वा दृष्टिदोषाद्वा प्रमादादशुद्धिश्चेत्तत्सारासारविवेकनि-पुणैर्विद्वद्भिर्दययादृष्ट्या संशोधितव्येति ।

# पद्धतेस्सूचीपत्रम् ।

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ४ | प्रतिष्ठांगभृत | प्रतिष्ठांगभूत |
| ३ | २ | पृथिवीभवा | पृथिवी नो भवा |
| ३ | ९ | अर्घं दद्यात् | अर्घ्यं दद्यात् |
| ४ | ३ | अर्घं दत्वा | अर्घ्यं दत्वा |
| ८ | १ | नवग्रहमख | नवगृहमख |
| ८ | ७ | पयस्वतिः | पयस्वतीः |
| ९ | ७ | बृहस्पतियो | बृहस्पतये |
| ११ | ९ | नम इति | नमः इति |
| १२ | ९ | सूर्यकोटिसमाभास्वं | सूर्यकोटिसमाभास |
| १६ | ४ | समपयामि | समर्पयामि |
| १९ | ५ | पूगीफलं | पूंगीफलं |
| २२ | ३ | नमस्[illegible] | नमोस्त्वनंताय |
| २३ | [illegible] | करागुष्टे | करांगुष्ठ |
| २३ | ५ | ब्रयात् | ब्रूयात् |
| २३ | ६ | अर्घ्यः भूमे | अर्घ्यभूमे |
| २४ | ३ | यजमानो ब्रयात् | यजमानो ब्रूयात् |
| २७ | १ | आयु मान् | आयुष्मान् |
| २७ | २ | समतिमि | समिति |
| २८ | ४ | इदं विष्णुरीति | इदं विष्णुरिति |
| २८ | ४ | विष्णुपूजने | विष्णुः पूजने |
| २९ | ७ | रुद्रमन्यवे | रुद्रमन्यव |
| २९ | ७ | उतोत इषव | उतोत इषवे |
| ३० | ६ | यगलेन | युगलेन |
| ३२ | २ | पुनरुर्ज्जीनि | पुनरुर्ज्जानि |
| ३२ | २ | वर्तस्वमान | वर्चस्वमान |
| ३२ | २ | सहस्रं घक्ष्वे | सहस्रं घूक्ष्वे |
| ३२ | ३ | विषताद्दषिः | विषताद्दयिः |
| ३२ | ९ | पूगीफल | पूंगीफलं |
| ३४ | ९ | पुतरापत | पुनरापत |
| ३५ | ९ | नीधीनांत्वा | निधीनांत्वा |
| ३७ | ९ | दिवाकर | दिवाकरं |
| ३७ | ९ | सहस्रांशो | सहस्रांशु |
| ३४ | ३ | सोम | सोमं |
| ५१ | ५ | संपृज्य | संपूज्य |
| ५२ | २ | संपृज्य | संपूज्य |

# शुद्धाशुद्धपत्रम् ।

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५२ | २ | संपृज्य | संपूज्य |
| ५३ | ३ | पंचलोकानां | पंचलोकपालानां |
| ५६ | ६ | शतिनीमि | शतिनिमे |
| ५८ | २ | देशकाला | देशकालौ |
| ६१ | ९ | स्वाहामावाहयेत् | स्वधामावाहयेत् |
| ७० | ४ | येनपूना | [illegible]नपूजा |
| ७० | ५ | विभूषितं | विभूषितं |
| ८० | ८ | इद्राग्नि | इंद्राग्नि |
| ९३ | ३ | अगच्छ | आगच्छ |
| ११५ | ८ | जन्वभव | जिन्वमव |
| ११५ | ९ | पषानो | पूषानो |
| १२९ | ३ | भवत | भवंतः |
| १३४ | ३ | मनोवयं | नमोवयं |
| १३४ | ६ | स्वाराज्यं | स्वराज्यं |

## शार्दूलविक्रीडितं ।

उन्मत्तप्रसवं शिवप्रियतमं नीत्वा शयेनाथ तच्छ्रीकण्ठस्य च कंठलम्बिफणिनो वक्त्रे पुनर्दत्तवान् ॥
इत्थं तत्फलकंटकक्षतमुखे शीत्कुर्वतीलाशये हेरंबः प्रजहास बालकतया यः सोऽवताद्वः प्रभुः ॥ १ ॥

## शार्दूलविक्रीडितं ।

विद्यादानपरो गुणी कृतिवरो विद्यालयाध्यापकः शर्म्मान्तो बुधवीरभानतनयो गोपालनामा द्विजः ॥
सिन्ध्वन्तर्गतसक्कराभिधपुरावासः परार्थोद्यतश्चक्रे नूतनगेहवेशसरणिं यज्ञप्रकाशामिमाम् ॥ २ ॥

ॐ श्रीगणेशाय नमः। श्रीसरस्वत्यै नमः। श्रीरामो विजयतेतराम्॥
अथ हवनपद्धतिः प्रारभ्यते । तत्रादौ यजमानः मंगलस्नानपूर्वकं स्नात्वा परि[illegible]धौतवस्त्रः कुंकुमचंदनादिधृतपुंड्रः संध्यादिवैश्वदेवांतं नित्यकर्म्म विधाय सौभाग्यवतीभिः स्त्रीभिर्गीतवाद्यशब्दैः सह नूतनगृहे मंडपसमीपे शुभदिने शुभमुहूर्ते कुशासनोपरि प्राङ्मुखो वोदङ्मुख उपविश्य स्वयं पादप्रक्षालनं कुर्यात् । ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा। यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यंतरः शुचिः॥ पुण्डरीकाक्षः पुनातु । आचमनीयं प्राणायामः । शिखां बद्ध्वा गणेशगुरुस्मरणं कुर्यात् अथासने विनियोगः । ॐ पृथ्वीति-

मंत्रस्य मेरुपृष्ठऋषिः सुतलं छंदः कूर्मो देवता आसने विनियोगः ॥ ॐ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ तत्रादौ भूम्यादीनां पूजनम् । ततो देशकालौ संकीर्त्य करिष्यमाणमंडपप्रतिष्ठांगभूतनिर्विघ्नतासिद्धये पृथ्वीकूर्मानंतादीनां पूजनमहं करिष्ये। अथावाहनम् । आगच्छ सर्वकल्याणि वसुधे लोकधारिणि। पृथिवी ब्रह्मदत्तासि काश्यपेनाभिवंदिता ॥ रत्नाकरे विष्णुना त्वं धृता वाराहरूपिणा । आगच्छ वरदे धातृयज्ञेऽस्मिन् शुभदायिनी ॥ इतिभूमिमावाह्य ॥ ततो गंधादि[illegible] संपूज्य । अथ विनियोगः । ॐ स्योनापृथिवीति-

मंत्रस्य मेधातिथिर्ऋषिः पुरउष्णिक्छंदः पृथिवी देवता मार्जने विनियोगः । ॐ स्योना पृथिवी भवानृक्षरानिवेशनी । यच्छानः शर्म्म स प्रथाः । इत्यनेन संमार्ज्य अनेन मंत्रेण पंचगव्यैः पंचामृतैः सिंचेत् । ॐ सिंचति परिषंचन्त्युत्सिचंति पुनंति च सुरायैवभ्रैमदे किंत्वो वदंति किंत्वः ॥ इति सिंचेत् । अर्घपात्रे जलादिकं क्षिपेत् । आपः क्षीरं कुशाग्राणि दधिदूर्वाक्षतास्तथा । तिलाः सिद्धार्थकाश्चैव अष्टांगोऽर्घ्यः प्रकीर्तितः ॥ तत अर्घ्यपात्रे हिरण्यगर्भेति दक्षिणां क्षिपेत् । पात्रसंपुटं कुर्यात् । हस्ताभ्यां पात्रमादायोत्तिष्ठेति मंत्रेणार्घं दद्यात् । तत्र मंत्राः । वसुधे पूजितासि त्वं विष्णुना शंकरेण

च। पार्वत्या चैव गायत्र्या स्कंदवैश्रवणादिभिः॥ इन्द्राद्यैः पूजितासि त्वं सधर्मविजिगीषया। सौभाग्यं देहि पुत्रांश्च धनं धान्यं शुभां मतिम्॥ गृहाणार्घ्यमिदं देवि कर्मसिद्धिं प्रयच्छ मे॥ इत्यर्घं दत्त्वा भूमौ पात्रे स्थापयेत्। ततः प्रतिज्ञासंकल्पं कुर्यात्। ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्याद्य ब्रह्मणः द्वितीयपरार्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वंतरेऽष्टाविंशतितमे कलियुगे कलिप्रथमचरणे भारतवर्षे भारतखंडे जम्बूद्वीपे रामक्षेत्रे परशुरामाश्रमे दण्डकारण्ये ब्रह्मावर्तैकदेशे कुमारिकाक्षेत्रांतर्गते श्रीमत्परशुरामक्षेत्रे गोदावर्या दक्षिणतटे कृष्णावेण्योत्तरतटे श्रीमद्भ-

वणान्धे: पूर्वभागे श्रीविष्णुबौद्धावतारेऽस्मिन्वर्तमानेऽमुकसंवत्सरे-
ऽमुकायनेऽमुकर्तावमुकमासेऽमुकपक्षेऽमुकतिथावमुकवासरेऽमुकन-
क्षत्रेऽमुकराशिस्थिते चंद्रेऽमुकराशिस्थिते श्रीसूर्येऽमुकराशिस्थिते
देवगुरौ शेषेषु ग्रहेषु यथायथाराशिस्थानस्थितेषु सत्सु एवं गुणविशे-
षेण विशिष्टायां शुभपुण्यतिथौ मम आत्मनः श्रुतिस्मृतिपुराणोक्त-
फलप्राप्त्यर्थं ममैश्वर्याभिवृद्ध्यर्थमप्राप्तलक्ष्मीप्राप्त्यर्थं प्राप्तलक्ष्मी-
चिरकालसंरक्षणार्थं सकलेप्सितकामनासिद्ध्यर्थं लोके वा सभायां
राजद्वारे वा सर्वत्र यशोविजयलक्ष्म्यादिप्राप्त्यर्थमिह जन्मनि ज-
न्मांतरे वा सकलदुरितोपशमनार्थं तथा मम यजमानस्य सभार्यस्य

सपुत्रस्य सबान्धवस्याखिलकुटुंबस्य सहितस्य समस्तभयव्याधि-
जरापीडामृत्युपरिहारद्वारा आयुरारोग्यैश्वर्याभिवृद्ध्यर्थं मम यजमा-
नस्य जन्मराशेः सकाशाद्वाखिलकुटुंबस्य जन्मराशेः सकाशाद्ये के-
चिद्विरुद्धचतुर्थाष्टमद्वादशस्थानस्थितक्रूरग्रहास्तैः सूचितं सूचयि-
ष्यमाणं च यत् सर्वारिष्टं तद्विनाशद्वारा एकादशस्थानस्थितवच्छु-
भफलप्राप्त्यर्थमन्तर्दशाविदशामहादशादिजन्मदशाहीनांशयात्यं-
शासु द्वादशादिवर्षदशासूचितारिष्टनिरसनार्थं पुत्रपौत्रादिसंततेरवि-
च्छिन्नवृद्ध्यर्थमादित्यादिनवग्रहानुकूलतासिद्ध्यर्थं तथा इन्द्रादिद-
शदिक्पालप्रसन्नतासिद्ध्यर्थमाधिदैविकाधिभूतकाऽध्यात्मत्रिविध-

तापोपशमनार्थं राजभयचौरभयभूकंपाद्युत्पातात्रिविधाग्निभयसम-
स्तभयनिवारणार्थं धर्मार्थकाममोक्षफलप्राप्त्यर्थं श्रीभगवतीमहा-
कालीमहालक्ष्मीमहासरस्वतीचित्रलेखनीदेवताप्रसन्नतासिद्ध्यर्थ-
मंते मोक्षफलप्राप्त्यर्थममुकात्मजामुकगोत्रोत्पन्नोऽहममुकप्रवरोऽह-
ममुकवेदांतर्गतोहममुकशाखाध्याय्यहममुकनामशर्म्माहं वा वर्म्मा-
हं वा वैश्योऽहं सूर्यादिनवग्रहाणामीश्वराद्यधिदेवतानामग्न्यादिप्र-
त्यधिदेवतानां गणेशादिपंचलोकपालानां इन्द्रादिदशदिक्पालानां
योगिन्यादिचतुषष्ट्यादीनां ब्रह्मविष्णुशिवगणपतिदुर्गालक्ष्मीसर-
स्वतीक्षेत्रपालपंचभूतविश्वकर्म्मणां गौर्यादिषोडशमातृणामन्येषा-

मपि स्थापितदेवानां नवग्रहमखकर्म्मणि करिष्यमाणस्वस्वलिंगोक्तदेवानां प्रतिष्ठाकर्म्मणः तन्निर्विघ्नतासमाप्तिसिद्ध्यर्थं पूर्वांगभूतस्वस्तिवाचनगणपतिपूजनमहं करिष्ये इति संकल्प्य ततो यजमानहस्ते अक्षतान् गृहीत्वा स्वस्तिवाचनं पठेयुः। हरिः ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु पयः पृथिव्यां पय ओषधीषु पयो दिव्यंतरिक्षे पयोधा पयस्वतिः प्रदिश्य संतु मह्यं विष्णो रराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि ॥ विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा अग्निर्देवता वातो देवता सूर्यो देवता चंद्रमा देवता वसवो देवता

रुद्रा देवता दित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पतिर्दे-
वता इन्द्रो देवता वरुणो देवता द्यौः शांतिरंतरिक्षः शान्तिः पृथिवी
शांतिरापः शांतिरोषधयः शांतिर्वनस्पतयः शांतिर्विश्वेदेवाः शांति-
र्ब्रह्मशांतिः सर्वंशांतिरेव शांतिः सा मा शांतिरेधि सुशांतिर्भवतु वि-
श्वानि देवसवितुर्दुरितानि परासुव यद्भद्रं तन्न आसुव इमा रुद्राय तव-
से कपर्दिने क्षयद्वीराय प्रभरामहे मतियथाशमसद्द्विपदे चतुष्पदे विश्वं
पुष्टं ग्रामे अस्मिन्ननातुरम्। एतंतेदेवसवितुर्यज्ञं प्राहुर्बृहस्पतिये ब्रह्म-
णे तेन यज्ञमव तेन यज्ञपातिं तेन मामव मनोजूतिर्जुषतामाज्यस्य बृ-
हस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञःसमिमं दधातु विश्वेदेवा स इहमाद-

यंतामों प्रतिष्ठ एष वै प्रतिष्ठानाम यज्ञो यत्रैतेन यज्ञेन यजंते तेन सर्वमेव प्रतिष्ठितं भवतु। ततो नमस्कारः। ॐ गणानां त्वा गणपतिँहवामहे प्रियाणां त्वा प्रियपतिँ हवामहे निधीनां त्वा निधपतिँहवामहे वसो मम आहमजानि गर्भध मा त्वमजासि गर्भधम्। नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमोनमः। सुमुखश्चैकदंतश्च कपिलो गजकर्णकः। लंबोदरश्च विकटो विघ्ननाशो विनायकः॥ धूम्रकेतुर्गणाध्यक्षो भालचंद्रो गजाननः। द्वादशैतानि नामानि यः पठेच्छृणुयादपि॥ विद्यारंभे विवाहे च प्रवे-

शे निर्गमे तथा। संग्रामे संकटे चैव विघ्नस्तस्य न जायते ॥ तद्यथा।
यत्पादपल्लवयुगं विनिधाय कुंभद्वंद्वे प्रयाणसमये स गणाधिराजः।
विघ्नान्विहंतु क्षमयस्य जगत्त्रयस्य गोविंदमादिपुरुषं तमहं भजामि॥
उद्यद्दिनेशरुचिरं निजहस्तपद्मैः पाशांकुशाभयवरान् दधतं गजास्य-
म्। रक्तांबरं सकलदुःखहरं गणेशं ध्यायेत्प्रसन्नमखिलाभरणाभिरा-
मम्॥ अविघ्नं कुरुते नित्यं विघ्नं च प्रतिहन्यते॥ यात्रामंगलसिद्ध्यर्थ-
मेकदंत नमोऽस्तु ते॥ शुक्लांबरधरं विष्णुं शुक्लवर्णं चतुर्भुजम्। प्रसन्न-
वदनं ध्यायेत्सर्वविघ्नोपशांतये॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः
सुरासुरैः। सर्वविघ्नहरः तस्मै गणाधिपतये नम इति नमस्कारः। हस्ते

अक्षतान् गृहीत्वा आवाहनं कुर्यात् ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञᳬसमिमं दधातु विश्वेदेवा स इहमादयंतामों प्रतिष्ठेति मंत्रेण प्रतिष्ठाप्यावाहयेत् । भो हेरम्ब त्वमेह्योहि ऽयंबकेयाम्बिकात्मज । सिद्धिबुद्धिपतेऽध्यक्ष सर्वलोकपितः पितः ॥ नागास्य नागहार त्वं गणनाथ चतुर्भुज । इहागच्छ । भूषितः स्वायुधैर्दिव्यैः पाशांकुशपरश्वधैः ॥ आवाहयामि पूजार्थं रक्षार्थमध्वरस्य च । इहागत्य गृहाण त्वं पूजां रक्ष च मे क्रतुम् । आगच्छ विघ्नराजेंद्र स्थाने चात्र स्थिरो भव ॥ यावत् पूजा समाप्येत तावत्त्वं सन्निधो भव । आगच्छ देवदेवेश गणनाथ नमोऽस्तु ते ॥ सूर्यकोटिसमाभास्त्वं गजवक्त्र

चतुर्भुज। गजवक्त्र गणाध्यक्ष सर्वविघ्नविनाशन॥ लम्बोदर त्रिनेत्र त्वं आगच्छ गणनायक। अथातः संप्रवक्ष्यामि गणयागं सुशोभनम्॥ कामके वासके यज्ञे विवाहे व्रतसंयमे। आदौ गणेश्वरः पूज्यः सर्वकामफलप्रदः॥ मासमासाधिपः पूज्यो गणेशो यो भविष्यति। येन पूजायते यज्ञे समाचार्यो वनस्पतिः॥ कोऽसौ मासपतिर्देवः सर्वविघ्नविनाशनः। श्रीकृष्ण उवाच॥ आदौ गणेश्वरः श्रेष्ठो विघ्ननाशो विनायकः। सर्वकामकृतौ पूज्यो यज्ञकाले सनातनः॥ मण्डलं च ततः कुर्यात् कोष्ठानां द्वादश स्मृतम्। सिंदूरस्थापितं देवमीशाने च विनायकम्॥ क्रमयुक्तस्ततः स्थाप्यो मासमासाधिपःप्रभुः। मार्गे गण-

पतिः पूज्यः पौषे चैव विनायकः ॥ गजवक्त्रो माघमासे भालचंद्रोऽथ फाल्गुने । उपेंद्रश्चैत्रमासे च वैशाखे विघ्ननाशनः ॥ ज्येष्ठे शिवसुतः पूज्य आषाढे हरनंदनः । श्रावणे विघ्नराजस्तु भाद्रेऽथो मोदकप्रियः ॥ आश्विने कार्तिके बीजं महामार्गे च बीजकम् । विघ्नहर्ताधिके मासे एवं पूज्यो गणेश्वरः ॥ गन्धपुष्पैस्तथा धूपैः कर्पूरैर्यक्षकर्दमैः । मृगाणां कुंकुमैः शुभ्रैः सिंदूरेण विशेषतः ॥ रक्तोत्पलदलैः पूज्यो बिल्वपत्रैश्च केशरैः । मालतीकेतकैः पुष्पैः हेमपुष्पैर्विचक्षणैः ॥ अर्घ्यपाद्यैश्च धूपैश्च रक्तवस्त्रेण छादयेत् । पूजां कुर्यात्तु देवस्य दद्यान्मोदकभोजनम् ॥ नमो मूषकमारूढ शुभकर्त्रेऽथ ते नमः । नमः

कात्यायनीपुत्र लंबकर्णाय वै नमः ॥ उद्यद्रविस्वरूपाय विद्याबुद्धिविचक्षणे। देहि मे पुत्रसौभाग्यं देहि मे सुखसंपदम् ॥ वांछासिद्धिश्च मे देहि विद्यां देहि यशो धनम्। शत्रवो नाशमायांतु दुर्जनो नाशतामियात् ॥ स्वानां चैव हितार्थाय प्रार्थयित्वा गणेश्वरम्। आदौ पूज्य गणेशं तु शांतिपाठमथाचरेत् ॥ नाशयेत् सर्वविघ्नानि कल्याणं जायते सदा। कृष्णेन भाषितं सर्वं देवतानां हितार्थिना ॥ उत्पाते विघ्नसंभूतौ पूजयेत् गणनायकमित्यावाह्य अथ संकल्पः ॥ ॐअस्य श्री नूतनगृहप्रतिष्ठाकर्मणः सांगतासिद्ध्यर्थं श्रीगणेशदेवस्य पंचोपचारैः यथाविधिपूजनमहं करिष्ये। अथ पुराणोक्तगण-

पतिपूजनम् । अथासनम् । सुमुखाय नमस्तुभ्यं गणाधिपतये नमः । पुष्पासनं मया दत्तं विघ्नपुञ्जं निवारय॥ गणपतये आसनं समर्पयामि। अथ पाद्यम् । उमापुत्राय देवाय सिद्धिवंद्याय ते नमः । पाद्यं गृहाण देवेश विघ्नव्यूहं निवारय॥ लम्बोदराय पाद्यं समर्पयामि ॥ अथार्घ्यम् । द्वैमातुर कृपासिंधो देव षाण्मातुराग्रज । वरदस्त्वं वरं देहि वांछितं वांछितार्थद ॥ अनेनार्घ्यप्रदानेन वांछितार्थं प्रयच्छ मे । एकदंत महाकाय नागयज्ञोपवीतक॥ गणाधिदेव देवेश गृहाणार्घ्यं नमोऽस्तु ते ॥ द्वैमातुराय नमः अर्घ्यं समर्पयामि । अथ स्नानम् । नर्मदाचन्द्रभागादिगंगासंगमजैर्जलैः । स्नापितोऽसि मया देव विघ्नसंघं

निवारय ॥ उमापुत्राय नमः स्नानं समर्पयामि । अथोपवीतम् । सूर्य-कोटिसमाभास नागयज्ञोपवीतक । सुवर्णसूत्रैरचितमुपवीतं गृहाण मे ॥ इभवक्त्र नमस्तेऽस्तु गृहाण परमेश्वर । ब्रह्मसूत्रं मया दत्तं विघ्न-पुञ्जं निवारय ॥ विघ्नेश्वराय नमः उपवीतं समर्पयामि । अथ वस्त्रम् । रक्तांबरधराधीश पाशांकुशधरेश्वर । वस्त्रयुग्मं मया दत्तं गृहाण परमेश्वर ॥ विघ्नेश्वराय नमः वस्त्रं समर्पयामि । अथ गन्धम् । ईशपुत्र नमस्तुभ्यं नमो मूषकवाहन । गंधं गृहाण देवेश विघ्नपुञ्जं निवारय ॥ गणाध्यक्षाय नमः गंधं समर्पयामि । अथाक्षताः । रक्तचंदनसंमिश्रै-रक्षतैः पूजयाम्यहम् । सर्वभूतहितार्थाय विघ्नराज जगद्गुरो ॥

विघ्नहर्त्रे नमः अक्षतान् समर्पयामि । अथ पुष्पाणि । पाटलामल्लिकादूर्वाशतपत्राणि वै प्रभो। पुष्पाणीश गृहाण त्वं विघ्नपुंजं निवारय॥ विघ्ननाशिने नमः पुष्पाणि समर्पयामि । अथ धूपम् । लंबोदर विशालाक्ष धूम्रकेतो नमो नमः। धूपं गृहाण देवेश विघ्नव्यूहं निवारय ॥ विकटाय नमः धूपं समर्पयामि । अथ दीपम् । घृताक्तिवर्तिसंयुक्तं वह्निना योजितं मया । दीपं गृहाण देवेश रुद्रप्रिय नमोऽस्तु ते॥ वामनाय नमः दीपं समर्पयामि । अथ नैवेद्यम् । नमो मोदकहस्ताय भालचंद्राय ते नमः॥ नैवेद्यं गृह्यतां देव विघ्नपुंजं निवारय॥ विघ्नेश्वराय नमः नैवेद्यं समर्पयामि। अथ फलम्। इदं फलं

मया देव स्थापितं पुरतस्तव। तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्म-
नि॥ सर्वार्तिनाशिने नमः फलं समर्पयामि। अथाचमनम्। गजानन
नमस्तुभ्यं विनायक नमो नमः। आचम्यतां गणाध्यक्ष विघ्नव्यूहं
निवारय॥ हेरम्बाय नमः आचमनं समर्पयामि। अथ ताम्बूलम्।
पूगीफलं सकर्पूरं नागवल्लीदलैर्युतम्। नानाभोग्यसमायुक्तं ताम्बूलं
प्रतिगृह्यताम्॥ विघ्नराजाय नमः ताम्बूलं समर्पयामि। अथ दक्षिणा।
हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः। अनंत पुण्यफलद मतः शां-
तिं प्रयच्छ मे॥ विनायकाय नमः दक्षिणां समर्पयामि। अथ नीराज-
नम्। चंद्रादित्यौ च धरणी विद्युदग्निस्तथैव च। त्वमेव सर्वज्योतींषि

आर्तिक्यं प्रतिगृह्यताम् ॥ गणेश्वराय नमः नीराजनं समर्पयामि । अथ प्रदक्षिणा । गणेश्वर नमस्ते तु सर्वसिद्धि प्रदायक । निर्विघ्नं कुरु देवेश सर्वकार्येषु सर्वदा ॥ धूम्राय नमः प्रदक्षिणां समर्पयामि । प्रार्थनापूर्वक-नमस्कारः अथ ध्यानम् । विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय । नागाननाय सितसर्पविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ॥ भक्तार्त्तिनाशनपराय गणेश्वराय सर्वेश्वराय शुभदाय सुरेश्वराय । विद्याधराय विकटाय च वामनाय भक्तप्रस-न्नवदनाय नमो नमस्ते ॥ इति नमस्कारं कुर्यात् । अनेन पाद्यादिभिः कृतेन गणपतिपूजनेन श्रीगणपतिदेवः प्रीयतां गणपतिपूजनकृतस्य

।विधेः सर्वं परिपूर्णमस्तु। इति पुराणोक्तगणपतिपूजनम्। अथाचार्या-
दिवरणम् । ततः संकल्प्य देशकालौ संकीर्त्य नवगृहमखहोमकर्म्म
कर्तुं अमुकगोत्रोऽहं अमुकशर्म्माहं वा वर्म्माहं वा वैश्योऽहमेभिरर्घ्य-
पाद्यगंधाक्षतपुष्पताम्बूलकुंडलांगुलीयकमण्डलुवासोभिः आचार्य-
त्वेन ऋत्विक्त्वेन अन्यविप्रैरपि अमुकगोत्रान् अमुकशर्म्मण अमुक-
वेदाध्यायिन अमुकशाखिन अमुकप्रवरान् ऋक्यजुःसामाथर्ववेदिन
युष्मानहं वृणे। तत आचार्यं प्रति यजमानो ब्रूयात् अस्मिन्नासने
आस्यतां आचार्यो वदेत् अहं आस्ये ततो यजमानः स्वहस्तयोरर्घ्य-
पात्रे आदाय। स्वागतं भो द्विजश्रेष्ठ मदनुग्रहकारक। इदमर्घ्यमिदं

पाद्यं भवद्भिः प्रतिगृह्यतामिति पठित्वा अर्घ्यं प्रतिगृह्यतामिति यजमानो वदेत् । तत आचार्य्यः प्रतिगृह्णामि ॐ अर्घ्योऽर्घ्योऽर्घ्य इत्याचार्येणोक्ते भूमौ प्रक्षिपेयुः । ततो यजमानः नमस्त्वनंतायेतिमंत्रेण पादप्रक्षालनं कुर्य्यात् । ॐ नमोऽस्त्वनंताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे । सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥ ततस्तिलकं । नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोविंदाय नमो नमः ॥ अमुकगोत्रं अमुकशर्म्माणं अमुकवेदाध्यायिनं आचार्यत्वेन त्वामहं वृणे । वृतोऽस्मीति प्रतिवचनम् । ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणां । दक्षिणया श्रद्धा-

प्नोति श्रद्धया सत्यमाप्यते॥ आचार्यस्तु यथा स्वर्गे शक्रादीना बृहस्पतिः। तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रतः गृहीत्वा तु कराङ्गुष्ठं यजमानः पठेदिदं अस्य कर्म्मणः प्रतिष्ठापनार्थं त्वं आचार्यो भव इति यजमानो वदेत्। अहं भवामि इति आचार्य्यवरणं ब्राह्मणं प्रति यजमानो ब्रूयात् अस्मिन्नासने आस्यतां अहं आस्ये॥ अर्घ्यं प्रतिगृह्यतां प्रतिगृह्णामि ॐ अर्घ्योऽर्घ्योऽर्घ्यः भूमेरर्घ्यं दत्त्वा नमोऽस्त्वनंतायेति पादप्रक्षालनं॥ नमो ब्रह्मण्येति तिलकं अमुकगोत्रं अमुकशर्म्माणं अमुकवेदाध्यायिनं ब्रह्मत्वेन त्वामहं वृणे वृतोऽस्मीति प्रतिवचनं यथा चतुर्मुखो ब्रह्मा सर्ववेदधरः प्रभुः। तथा त्वं मम

यज्ञेऽस्मिन् ब्रह्मा भव द्विजोत्तम गृहीत्वा तु करांगुष्ठं यजमानः पठेदिदं अस्य कर्म्मणः प्रतिष्ठापनार्थं त्वं ब्रह्मा भव इति यजमानो वदेत् अहं भवामि इति ब्राह्मणवरणम् ॥ ऋग्वेदिनं प्रति यजमानो ब्रूयात् अस्मिन्नासने आस्यतां अहं आस्ये अर्घ्यं प्रतिगृह्यतां प्रतिगृह्णामि ॐ अर्घ्योऽर्घ्योऽर्घ्यः भूमेरर्घ्यं दत्वा नमोऽस्त्वनंतायेति पादप्रक्षालनं नमो ब्रह्मण्येति तिलकं अमुकगोत्रं अमुकशर्म्माणं अमुकवेदाध्यायिनं ब्रह्मत्वेन त्वामहं वृणे वृतोऽस्मि इति प्रतिवचनं ऋग्वेदः पद्मपत्राक्षो गायत्र्या सोमदैवतः । अत्रिगोत्रस्तु विप्रेंद्र ऋत्विक् त्वं मे मखे भव ॥ गृहीत्वा तु करांगुष्ठं यजमानः पठेदिदं

अस्य कर्मप्रतिष्ठापनार्थं त्वं अस्मिन्यज्ञकर्म्माणि ऋग्वेदी भव इति यजमानो वदेत् अहं भवामि इति ऋग्वेदीवरणं ॥ यजुर्वेदिनं प्रति यजमानो ब्रूयात् अस्मिन्नासने आस्यतां अहं आस्ये अर्घ्यं प्रतिगृह्यताम् प्रतिगृह्णामि ॐ अर्घ्योऽर्घ्योऽर्घ्यः भूमेरर्घ्यं दत्वा नमोऽस्त्वनंतायेति पादप्रक्षालनं कृत्वा नमो ब्रह्मण्येति तिलकं अमुकगोत्रं अमुकशर्म्माणं अमुकवेदाध्यायिनं ऋत्विक्त्वेन त्वामहं वृणे वृतोऽस्मीति प्रतिवचनम् ॥ ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणां ॥ दक्षिणया श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥ १ ॥ यथा । कातराक्षो यजुर्वेदस्त्रैष्टुभो ब्रह्मदैवत । भार-

द्वाजस्तु विप्रेंद्र ऋत्विक् त्वं मे मखे भव ॥ गृहीत्वा तु करांगुष्ठं यज-
मानः पठेदिदं अस्य कर्म्मणः प्रतिष्ठापनार्थं त्वमस्मिन्यज्ञकर्माणि
यजर्वेदी भव अहं भवामि सामवेदिनं प्रति यजमानो ब्रूयात् अ-
स्मिन्नासने आस्यतां अहं आस्ये। अर्घ्यं प्रतिगृह्यतां प्रतिगृह्णामि।
अर्घ्योऽर्घ्योऽर्घ्यः भूमेरर्घ्यं दत्वा नमोऽस्त्वनंतायेति पादप्रक्षालनम्
नमो ब्रह्मण्येति तिलक अमुकगोत्रं अमुकशर्म्माणं अमुकवेदाध्या-
यिनं त्वामहं वृणे। वृतोऽस्मीति प्रतिवचनं। सामवेदस्तु पिंगाक्षस्त्रै-
ष्टुभो विष्णुदैवतः। काश्यपेयस्तु विप्रेंद्र ऋत्विक् त्वं मे मखे भव॥ गृही-
त्वा तु करांगुष्ठं यजमानः पठेदिदं। अस्य कर्म्मणः प्रतिष्ठापनार्थं त्वं

अस्मिन् यज्ञकर्म्मणि सामवेदी भव अहं भवामि। अथर्ववेदिनं प्रति। यजमानो ब्रूयात्। अस्मिन्नासने आस्यताम् अहं आस्ये अर्घ्यं प्रतिगृह्यतां प्रतिगृह्णामि ५ ॐ अर्घ्योऽर्घ्योऽर्घ्यः भूमेरर्घ्यं दत्त्वा नमोऽस्त्वनंतायेति पादप्रक्षालनम्। नमो ब्रह्मण्येति तिलकं अमुकगोत्रं अमुकशर्म्माणं अमुकवेदाध्यायिनं त्वामहं वृणे वृतोऽस्मीतिप्रतिवचनम्। बृहन्नेत्रोऽथर्ववेदोऽनुष्टुभो रुद्रदैवतः। वैखानसोऽत्र विप्रेंद्र ऋत्विक् त्वं मे मखे भव। गृहीत्वा तु करांगुष्ठं यजमानः पठेदिदम्॥ अस्य कर्म्मणः प्रतिष्ठापनार्थं त्वमस्मिन् यज्ञकर्माणि अथर्वेदी भव अहं भवामि। अन्येषामपि एवं वृणुयात्। अथ दिग्रक्षा।

पूर्वे रक्षतु गोविंद आग्नेय्यां गरुडध्वजः । याम्यां रक्षतु वाराहो नारसिंहस्तु नैर्ऋते ॥ वारुण्यां केशवो रक्षेद्वायव्यां मधुसूदनः । उत्तरे श्रीधरो रक्षेदीशाने तु गदाधरः ॥ ऊर्द्ध्वं गोवर्धनो रक्षेदधस्ताच्चित्रविक्रमः । एवं दश दिशो रक्षेद्वासुदेवो जनार्दनः ॥ अपसर्पंतु ये भूता ये भूता भूमिसंस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यंतु शिवाज्ञया ॥ अपक्रामंतु भूतानि पिशाचाः सर्वतो दिशम् । सर्वेषामविरोधेन यज्ञकर्म समारभेत् ॥ इति अक्षतान् विकिरयेत् । इति दिक्रक्षा ॥ अथ यजमानवरणम् ॥ ॐ मा नः शꣳसो अररुषो धूर्तिः प्रणꣳमर्त्यस्य रक्षाणो ब्रह्मणस्पते । ॐ यदा बध्नन् दाक्षायणा हिरण्यꣳशतानीकाय सुमन-

स्यमानाः। तन्म आबध्नामि शतशारदायाऽऽयुस्मान् जरदष्टियथास-
मातिमि पठेत् । ॐ येन बद्धो बलीराजा दानवेंद्रो महाबलः। तेन
त्वां प्रतिबध्नामि रक्षे मा चल मा चल ॥ ततो यजमानस्तिलकं
कुर्य्यात् । इति यजमानवरणम् ॥ अथ कुंडे विश्वकर्म्मणः आवाह-
नम्। कुंडं कुशोदकेन प्रोक्ष्य ॐ आवाहयामि। तत् कुंडं विश्वकर्म्मवि-
निर्मितशारीरं यच्च ते दिव्यमभ्यधिष्ठानमद्भुतम् । इत्यावाह्य प्रार्थ-
येत्। ये च कुंडे स्थिता देवा कुण्डांगे याश्च देवताः । ऋद्धिं यच्छंतु ते
सर्वे यज्ञसिद्धिं मुदान्विताः ॥ हे कुंड तव निर्माणं रचितं विश्वक-
र्म्मणा। अस्माकं वांञ्छितां सिद्धिं यज्ञसिद्धिं ददातु भो॥ पाद्यादिभिः

संपूज्य । अथ मेखलापूजनम् । उपरि मेखलायां श्वेतवर्णालंकृतायां विष्णुमावाहयेत् । ॐ विष्णोर्यज्ञपते देव दुष्टदैत्यनिषूदन । विभो यज्ञस्य रक्षार्थं कुंडेऽसंन्निहितो भव । ततो विनियोगः । इदं विष्णुरीतिमंत्रस्य मेधातिथिऋषिः गायत्रीच्छंदः विष्णुर्देवता विष्णुपूजने विनियोगः । ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदं समूढमस्यपाꣳसुरे । पाद्यादिभिः संपूज्य । ततो मध्यमेखलायां रक्तवर्णालंकृतायां ब्रह्माणमावाहयेत् । अक्षतान् गृहीत्वा । ॐ हंसपृष्ठसमारूढ देवदेवगणावृत । रक्षार्थं मम यज्ञेऽस्मिन् कुंडेऽस्मिन् संन्निधो भव ॥ इत्यावाह्य । ॐ ब्रह्मयज्ञानमिति विवस्वान ऋषिस्त्रिष्टुप् छंदः ब्रह्मदेवता

ब्रह्मपूजने विनियोगः । ॐ ब्रह्मयज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः । सबुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ ततो गंधादिभिः संपूज्य । तृतीयमेखलायां रुद्रमावाहयेत् । कृष्णवर्णालंकृतायां रुद्रं पूजयेत् । अथावाहनम् । आगच्छ भगवन् रुद्र कुंडेऽस्मिन् सन्निधो भव । गंगाधर महादेव वृषारूढ महेश्वर ॥ ॐ नमस्ते रुद्र मन्यवेति परमेष्ठी ऋषिर्गायत्री छंदः रुद्रोदेवता रुद्रपूजने विनियोगः । ॐ नमस्ते रुद्रमन्यवे उतोत इषव नमः । बाहुभ्यामुतते नमः । ततः गंधादिभिः संपूज्य । अथ योनिपूजा योनिमुद्रां प्रदर्श्य नमस्कारं ॐ जगदुत्पत्तिहेतुकायै मनोभवयुतायै योन्यै नमो नमः । अथ

विनियोगः। क्षत्रस्य योनिरिति विवस्वानृषिःद्विपदा गायत्रीछंदः योनिर्देवता योनिपूजनेविनियोगः। ॐ क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसि मत्वा हिᳫंसी मा हिᳫंसी। ततो गंधादिभिः संपूज्य। अथ पंचभूसंस्कारः । कुशैः परिसमुह्य तान् कुशान् ऐशान्यां परित्यज्य गोमयोदकेनोपलिप्य खादिरेण स्रुवेण चोल्लेखनं हस्तेनोद्धरणं जलेनाभ्युक्षणं कांस्यपात्रयगलेन लौकिकं निर्मितं वाऽग्निमानीय स्थापयेत् प्राङ्मुखं समाधाय अग्निमावाहयेत् । ॐ अग्निन्दूतं पुरो दधे हव्यवाहनमुपब्रूवे देवाᳬआसादयादिह । अथाग्निध्यानम् । ॐ ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निष्कले वा शैले वा

वने वा सरलपवनयोर्यत्र कुत्र स्थितो वा। क्षेत्रे पीठोपपीठे दशकृति यदा धूपदीपादिकेन प्रीत्या देवः सदा नः शुभफलविधिना पातु वीर्येण वंद्यः। इत्यग्निं स्थापयेत् ततः ॥ पुष्पचंदनताम्बूलदक्षिणां पात्रे क्षिपेत् । इति पंचभूसंस्काराः । तत ईशानकोणे अव्रणं कलश-स्थापनम् । भूमिस्पर्शमंत्रः । ॐ भूरसि भूमिरस्यदितिरासि विश्वधाया विश्वस्य भुवनस्य धर्त्री पृथिवीं यच्छ पृथिवीन्दृ ह पृथिवी मा हिं सीः ॥ धान्यस्पर्शनम् । धान्यमसि धिनुहि देवान् प्रा-णायत्वोदानाय त्वा व्यानाय त्वा दीर्घामनुप्रसितिमायुषेधान् देवोवः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा मही-

नां पयोसि । तस्यापार कलशस्थापनम् । ॐ आजिघ्रकलशं मह्यात्वा विशंत्विंदव पुनरूर्जीनिर्वर्तस्वसानः सहस्रंधक्ष्वेरुधारापयस्वतीः पुनर्माविशताद्द्रयिः । वरुणस्येति उदकं क्षिपेत् । ॐ वरुणस्योत्तंभन- मसि वरुणस्य स्कंभसर्जनीस्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसी वरुणस्यऋतसदनमासीद । जलं क्षिपेत् । पवित्रं कलशे क्षिपेत् । पवित्रेस्थोवैष्णव्यौ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवि- त्रेण सूर्य्यस्य रश्मिभिः । आम्रपत्राणि क्षिपेत् । ॐ अंबे अम्बिके अंबालिके न मानयति कश्चन ससस्त्यश्व कः सुभद्रिकां कांपील- वासिनीम् । इति क्षिपेत् । पूगीफलप्रक्षेपः ॐ याः फलिनीर्या अफला

अपुष्पायाश्च पुष्पिणीः। बृहस्पति प्रसूतास्तानोमुंचत्व॑ंह सः इति क्षिपेत्। पंचरत्नानि प्रक्षिपेत्। कनकं १ कुलिशं २ नीलं ३ पद्मरागं ४ च मौक्तिकम् ५। एतानि पंच रत्नानि प्रक्षिपेत् कलशे तथा॥ अनेन मंत्रेण ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् दधद्रत्नानि दाशुषे इति पंचरत्नानि प्रक्षिपेत्। हिरण्यगर्भेति दक्षिणां प्रक्षिपेत्। ॐ हिरण्यगर्भः समवर्तताग्रेभूतस्य जातः पतिरेक आसीत्। सदा धार-पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम। इति द्रव्याणि क्षिपेत्। तूष्णीं गंधप्रक्षेपः। गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीं। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥ सर्वौषधीनां प्रक्षेपः।

ॐ या औषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरामनैनु बभ्रुणामहᳬ शतं धामानि सप्त च । इति क्षिपेत् । सप्तमृदप्रक्षेपः । अश्वस्थानाद्गजस्थानाद्वल्मीकात् संगमाद्ध्रदात् । राजद्वाराद्गोकुलाच्च मृदमानीय निक्षिपेत् ॥ ॐ स्योना पृथिवी नो भवानृक्षरा निवेशनी यच्छानः शर्म सप्रथाᳬ॥ दूर्वाप्रक्षेपः । ॐ कांडात् कांडात् प्ररोहंती परुषᳬ परुषस्परि एवानो दूर्वे प्रतनु सहस्रेण शतेन च ॥ अश्वत्थपत्रप्रक्षेपः । ॐ अश्वत्थेवो निषदनं पर्णेवो वसतिष्कृता गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ इति आम्रपत्राणि प्रक्षिपेत् । पूर्णादर्वीतिमंत्रेण तंडुलपूर्णपात्रं कलशोपरि स्थापयेत् ॥ ॐ पूर्णादर्वि परापत सुपूर्णा पुनरापत वस्नेव

विकीर्णावहा इषमूर्ज६ शतक्रतो ॥ श्रीश्च तेतिमंत्रेण श्रीफलं निधाय ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्म इषाण सर्वं लोकम्म इषाण ॥ इति नारिकेलं निधापयेत् ततो वस्त्रेणाच्छाद्य ॥ ॐ मनोज्यूतिर्जुषता-माज्यस्य बृहस्पतिर्यज्ञमिमं तन्नोत्वरिष्ठं यज्ञ६समिमं दधातु विश्वे-देवास इहमादयंतामों प्रतिष्ठ ॥ इति कलशप्रतिष्ठा । ततो गणेश-वरुणस्थापनम् । गणानां त्वेतिमंत्रेण गणपतिमावाहयेत् ॥ ॐ गणानां त्वा गणपति६ हवामहे प्रियाणां त्वां प्रियपति६ हवामहे नीधीनां त्वा निधिपति६ हवामहे वसो मम आहमजानि गर्भध

मा त्वमजासि गर्भधम् ॥ अथ वरुणावाहनम् । ॐ तत्वायामि ब्रह्मणा वंदमानस्तदा शास्ते यजमानो हविर्भिः । अहेडमानो वरुणे हबोध्युरुशꣳस मान आयुः प्रमोषीः । ॐ भूर्भुवःस्वः गणेशवरुणौ आवाहयामि स्थापयामि । षोडशोपचारैः गणेशवरुणौ पूजयेत् । कलशे गंगाद्यावाहनम् । सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयांतु यजमानस्य दुरितक्षयकारकाः ॥ कलशस्य मुखे विष्णुः कंठे रुद्रः समाश्रितः । मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागरास्सप्त सप्तद्वीपा वसुंधरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदोह्यथर्वणः ॥ अंगैश्च सहिताः सर्वे कलशं तु समाश्रिताः । ततः

कलशप्रार्थना ॥ देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि यदा कुंभ विधृतो विष्णुना स्वयम् ॥ त्वत्तः सर्वाणि तीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठंति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ त्वयि तिष्ठंति सर्वेपि यतः कामफलप्रदाः । त्वत् प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ इति कलशप्रार्थना । रक्तपुष्पाक्षतैः सूर्यादिनवग्रहाणामावाहनम् । रक्तपुष्पाक्षतैः मध्ये वर्तुलाकारे चक्रे रविमावाहयेत् । ॐ दिवाकर सहस्रांशो सुरासुरनमस्कृतम् । लोक-

नाथं विश्वनेत्रं सूर्य्यमावाहयाम्यहम् ॥ ॐ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ ॐ भूर्भुवः स्वः कलिंगदेशोद्भव काश्यपसगोत्र सूर्य इहागच्छ इह तिष्ठ सूर्य्याय नमः सूर्य्यमावाहयामि स्थापयामि ततः पाद्यादिभिः संपूज्य अथ ध्यानम् । ॐ भास्वान् काश्यपगोत्रजोऽरुणरुचिर्यः सिंहराशीश्वरः षट्त्रिस्थो दशशोभनो गुरुशशीभौमेषु मित्रं सदा । शुक्रो मंदरिपुः कलिङ्गजनितश्चाग्नीश्वरौ देवते मध्ये वर्तुलपूर्वदिग्दिनकरः कुर्यात् सदा मंगलम् ॥ १ ॥ अनेन पूजनेन श्रीसूर्यदेवता प्रीयताम् । आग्नेयामर्धचंद्राकारे श्वेतपुष्पाक्षतैश्चंद्र-

मावाहयेत्। हिमरश्मिं निशानाथं तारकाभिः समन्वितम्। औषधीनां तु राजानं सोममावाहयाम्यहम्॥ ॐ इमं देवा असपत्नꣳ सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेंद्रस्येंद्रियाय इममुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोमी राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजा। भूर्भुवः स्वः यमुनातीरदेशोद्भव आत्रेयसगोत्र चंद्र इहागच्छ इह तिष्ठ आवाहयामि स्थापयामि ततः पाद्यादिभिः संपूज्य। अथ ध्यानम्। चंद्रः कर्कटकप्रभुः सितनिभश्चात्रेयगोत्रोद्भवश्चाग्नेयश्चतुरस्रवारुणमुखश्चापोऽप्युमाधीश्वरः। षट् सप्ताग्निदशैकशोभनफलो ज्ञोरी गुरोर्कप्रियः स्वामी यामुनदेशजो हिमकरः कुर्यात् सदा

मंगलम् ॥ २ ॥ अनेन पूजनेन चंद्रमादेवता प्रीयताम् । याम्यत्रिकोणे चक्रे रक्तपुष्पाक्षतैः भौममावाहयेत् । धरणीगर्भसंभूतं लोहितांगं सुवर्चसम् । कुमारं क्रूरकर्म्माणं भौममावाहयाम्यहम् ॥ ॐ अग्निर्मूर्धादिवः ककुत्पतिः पृथिव्याअयं अपाᳬं रेताᳬंसि जिन्वति । ॐ भूर्भुवः स्वः अवंतिदेशोद्भव भारद्वाजसगोत्र भौम इहागच्छ इह तिष्ठ आवाहयामि स्थापयामि ततः पाद्यादिभिः संपूज्य । अथ ध्यानम् । भौमो दक्षिणादिक् त्रिनेत्रयमदिक् विघ्नेश्वरो रक्तभः स्वामी वृश्चिकमेषयोः सुरगुरुश्चार्कः शशी सौहृदः । ज्ञोरी षट्त्रिफलप्रदश्च वसुधास्कंदौ क्रमाद्दैवते भारद्वाजकुलोद्भवः क्षितिसुतः कुर्यात् सदा मंगलम् ॥ ३ ॥

ऐशान्यां पीतपुष्पाक्षतैः बुधमावाहयेत् । बुधं बुद्धिप्रदातारं सोम-
वंशविवर्द्धनम् । यजमानहितार्थाय बुधमावाहयाम्यहम् ॥ ॐ उद्बु-
ध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्ते सꣳ सृजेथामयं च अस्मिन्सधस्थे
अध्युत्तरस्मिन्विश्वेदेवा यजमानश्च सीदत ॥ ॐ भूर्भुवः स्वः मग-
धदेशोद्भव आत्रेयसगोत्र बुध इहागच्छ इह तिष्ठ आवाहयामि स्था-
पयामि । ततः पाद्यादिभिः संपूज्य ॥ अथ ध्यानम् ॥ ॐ सौम्योदङ्मु-
खपीतवर्णमगधश्चात्रेयगोत्रोद्भवो बाणेशानदिशः सुहृत् शनिभृगू
शत्रुः सदा शीतगुः । कन्यायुग्मपतिर्दशाष्टचतुरः षण्णेत्रकः शोभनो
विष्णुः पौरुषदेवते शशिसुतः कुर्यात् सदा मंगलम् ॥ ४ ॥ उत्तरे पीत-

पुष्पाक्षतैः गुरुमावाहयेत् । बुद्धिश्रेष्ठोऽगिरःपुत्रो देवानां यो गुरुः स्मृतः । तमिन्द्रमंत्रिणं भक्त्या गुरुमावाहयाम्यहम् ॥ ॐ बृहस्पते अतियदर्यो अर्हा द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवस ऋत-प्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥ ॐ भूर्भुवः स्वः सिंधुदेशो-द्भव आंगिरसगोत्र बृहस्पते इहागच्छ इह तिष्ठ आवाहयामि स्थापयामि ततः पाद्यादिभिः संपूज्य ॥ अथ ध्यानम् । जीवश्चांगिर-गोत्रजोत्तरमुखो दीर्घो शरासंस्थितः पीताश्वत्थसमिच्च सिंधुजनित-श्चापोऽथ मीनाधिपः । सूर्य्येंदुक्षितिजाप्रियो बुधसितौ शत्रू समा-श्चापरे सप्तांकद्विभवे शुभः सुरगुरुः कुर्य्यात् सदा मंगलम् ॥ ५ ॥ पूर्वे

श्वेतपुष्पाक्षतैः शुक्रमावाहयेत् । प्रविष्टो जठरे शंभोर्निसृतः पुनरेव यः । तं सुरारिं गुरुं भक्त्या शुक्रमावाहयाम्यहम् ॥ ॐ अन्नात् परिस्रुतो रसं ब्रह्मणा व्यपिबत् क्षत्रं पयः सोम प्रजापतिः ऋतेन सत्यमिन्द्रियंविपानठं शुक्रमंधस इन्द्रस्येन्द्रियमिदं पयोमृतं मधु ॥ ॐभूर्भुवःस्वः भोजकटदेशोद्भव भार्गवसगोत्र शुक्र इहागच्छ इह तिष्ठ आवाहयामि स्थापयामि ततो गंधादिभिः संपूज्य ॥ अथ ध्यानम् । ॐ शुक्रो भार्गवगोत्रजः सितनिभः प्राचीमुखः पूर्वदिक् पञ्चांगो वृषभस्तुलाधिपमहाराष्ट्राधिपोदुम्बरः । इन्द्राणीमघवानुभौ बुधशनी मित्रेऽर्कचंद्रौ रिपू षष्ठो द्विर्दशवर्जितो भृगुसुतः कुर्यात् सदा मं-

गलम् ॥ ६ ॥ अनेन पूजनेन शुक्रदेवता प्रीयतां नमः ॥ पश्चिमे कृष्ण-पुष्पाक्षतैः शनिमावाहयेत् । धर्म्मराजानुजं देवं भिन्नांजनसमप्र-भम् । छायामार्तण्डसंभूतं शनिमावाहयाम्यहम् ॥ ॐ शन्नोदेवीर-भिष्टय आपो भवंतु पीतये । शंय्योरभिस्रवंतु नः ॥ ॐभूर्भुवः स्वः सौराष्ट्रदेशोद्भव काश्यपसगोत्र शने इहागच्छ इह तिष्ठ आवाह-यामि स्थापयामि ततः पाद्यादिभिः संपूज्य ॥ अथ ध्यानम् । ॐमन्दः कृष्णनिभस्तु पश्चिममुखः सौराष्ट्रकः काश्यपः स्वामी माकरकुंभयोः बुधसितौ मित्रे समश्चाङ्गिराः । स्थानं पश्चिमदिक् प्रजापतियमौ देवौ धनुष्यासनः षट्त्रिस्थः शुभकृच्छनी रविसुतः कुर्यात् सदा

मंगलम् ॥ अनेन पूजनेन शनिदेवता प्रीयताम् ॥ ७ ॥ नैर्ऋत्यां धूम्र-पुष्पाक्षतैः राहुमावाहयेत् । चक्रेण च्छिन्नमूर्द्धानं विष्णुना च निरीक्षितं । सैंहिकेयं महाकायं राहुमावाहयाम्यहम् ॥ ॐ कयानश्चित्रआ-भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥ ॐ भूर्भुवः स्वः राठिनदेशोद्भव पैठिनसगोत्र राहो इहागच्छ इह तिष्ठ आवाहयामि स्थापयामि ततः पाद्यादिभिः संपूज्य ॥ अथ ध्यानम् । ॐ राहुः सिंहलदेशजश्च निर्ऋतिः कृष्णाङ्गशूर्पासनो यः पैठिनसिगोत्रसंभव-समिद्दूर्वामुखो दक्षिणः । यः सर्पाद्यधिदेवते च निर्ऋतिप्रत्याधिदेवः सदा षट्त्रिस्थः शुभकृच्च सिंहिकसुतः कुर्यात् सदा मंगलम् । अनेन

पूजनेन राहुदेवता प्रीयताम् ॥ ८ ॥ वायव्यां धूम्रपुष्पाक्षतैः केतुमावाहयेत् । अंजनाभं महारुद्रं बहुरूपं महाग्रहम् । महाकायं क्रूरकृत्यं केतुमावाहयाम्यहम् ॥ ॐ केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे। समुषद्भिरजायथाः । ॐ भूर्भुवः स्वः अंतर्वेदिसमुद्भव जैमिनसगोत्र केतो इहागच्छ इह तिष्ठ आवाहयामि स्थापयामि ततो गंधादिभिः संपूज्य। अथ ध्यानम् । ॐ केतुर्जैमिनगोत्रजः कुशसमिद्वायव्यकोणे स्थितश्चित्राङ्गध्वजलाञ्छनो हिमगुहा यो दक्षिणाशामुखः । ब्रह्मा चैव सचित्रचित्रसहितः प्रत्याधिदेवः सदा षट्त्रिस्थः शुभकृच्च बर्बरपतिः कुर्यात् सदा मंगलम् ॥ अनेन पूजनेन केतुदेवता प्रीय-

ताम् ॥ ९ ॥ इति नवग्रहपूजा । अथाधिदेवतानामावाहनपूजा । मध्ये रविदक्षिणपार्श्वे श्वेतपुष्पाक्षतैः रुद्रमावाहयेत् । ॐ त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्द्धनं उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ १ ॥ शिव इहागच्छ इह तिष्ठ आवाहयामि स्थापयामि ततः पाद्यादिभिः संपूज्य अनेन पूजनेन शिवः प्रीयताम् । आग्नेय्यां चन्द्रस्य दक्षिणे रक्तपुष्पाक्षतैः उमामावाहयेत् । ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्म इषाण सर्वलोकम्म इषाण ॥ २ ॥ उमे इहागच्छ इह तिष्ठ । ततः पाद्या-दिभिः संपूज्य ॥ याम्यां भौमस्य दक्षिणे पीतपुष्पाक्षतैः स्कंदमावा-

हयेत् । ॐ यदक्रंदः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महिजातं ते अर्व्वन् ॥ ३ ॥ स्कंद इहागच्छ इह तिष्ठ ॥ ऐशान्यां बुधदक्षिणे पीतपुष्पाक्षतैः विष्णुमावाहयेत् । ॐ विष्णोरराटमसि विष्णो श्नप्त्रेस्थो विष्णो स्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा ॥ ४ ॥ विष्णो इहागच्छ इह तिष्ठ ततः पाद्यादिभिः संपूज्य । उत्तरे श्वेतपुष्पाक्षतैः ब्रह्माणमावाहयेत् । ॐ ब्रह्मजज्ञानं प्रथमं पुरस्तात् द्विसीमतः सुरुचो वेन आवः सबुध्न्याउपमाअस्यविष्ठाः सतश्च योनिमसतश्च विवः ॥ ५ ॥ ब्रह्मन् इहागच्छ इह तिष्ठ ततः पाद्यादिभिः संपूज्य । पूर्वे

शुक्रस्य दक्षिणे पीतपुष्पाक्षतैः इन्द्रमावाहयेत् । ॐत्रातारमिंद्रम-
वितारमिंद्रꣳ हवेहवे सुहवꣳ शूरमिंद्रं । ह्वयामिशक्रं पुरुहूतमिंद्रꣳ
स्वस्तिनो मघवा धात्विंद्रः॥ ६ ॥ इन्द्र इहागच्छ इह तिष्ठ ततः
पाद्यादिभिः संपूज्य । पश्चिमे शनेर्दक्षिणे कृष्णपुष्पाक्षतैः यममा-
वाहयेत् । ॐ यमाय त्वा मखाय त्वा सूर्य्यस्य त्वा तपसे देवस्त्वा
सविताम‍ह्वानक्तुपृथिव्याः सꣳस्पृशस्पाहि अर्चिरसि शोचिरसि
तपोसि ॥ ७ ॥ यम इहागच्छ इह तिष्ठ ततः पाद्यादिभिः संपूज्य ।
नैर्ऋत्यां राहुदक्षिणे धूम्रपुष्पाक्षतैः । कालमावाहयेत् । ॐ कार्षिरसि
समुद्रस्य त्वाक्षित्या उन्नयामि समापो अद्भिरग्मतसमोषधीभिरो-

षधीः ॥ ८ ॥ काल इहागच्छ इह तिष्ठ ततः पाद्यादिभिः संपूज्य । वायव्यां केतुदक्षिणे रक्तपुष्पाक्षतैः चित्रगुप्तमावाहयेत् । ॐ चित्रा-वसौ स्वस्ति ते पारमशीय ॥ ९ ॥ चित्रगुप्त इहागच्छ इह तिष्ठ ततः पाद्यादिभिः संपूज्य । अथ प्रत्याधिदेवतानां आवाहनं पूजनं च ॥ मध्ये सूर्य्यस्य वामे रक्तपुष्पाक्षतैः अग्निमावाहयेत् । ॐ अग्निं दूतं पुरोदधे हव्यवाहमुपब्रुवे देवाँ२ आसादयादिह । अग्ने इहागच्छ इह तिष्ठ ततः पाद्यादिभिः संपूज्य ॥ १ ॥ आग्नेय्यां चन्द्रस्य वामे श्वेतपु-ष्पाक्षतैः जलमावाहयेत् । ॐ अप्स्वग्ने सधिष्ठ वसौषधीरनुरुध्यसे गर्भे संजायसे पुनः । जल इहागच्छ इह तिष्ठ ततः पाद्यादिभिः संपूज्य ।

दक्षिणे भौमस्य वामपार्श्वे रक्तपुष्पाक्षतैः अग्निमावाहयेत् । ॐ
स्योना पृथिवि नो भवानृक्षरानिवेशनी यच्छानः शर्म्मसप्रथा÷।
पृथिवीहागच्छ इह तिष्ठ। ईशाने बुधस्य वामे पीतपुष्पाक्षतैः विष्णु-
मावाहयेत्। ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् समूढमस्यपांꣳ
सुरे॥ विष्णो इहागच्छ इह तिष्ठ ततः पाद्यादिभिः संपूज्य। उत्तरे
गुरुवामे पीतपुष्पाक्षतैः इन्द्रमावाहयेत्। ॐ त्रातारमिंद्रमवितारमिं-
न्द्रꣳहवेहवे सुहवꣳशूरमिंद्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्रꣳस्वस्ति नो
मघवा धात्विंद्र÷॥ इंद्र इहागच्छ इह तिष्ठ ततः पाद्यादिभिः संपृज्य।
पूर्वे शुक्रस्य वामे पीतपुष्पाक्षतैः इन्द्राणीमावाहयेत् । ॐ अदित्यै

रास्नासींद्राण्या उष्णीष÷पूषासि घर्मायदीष्व । इन्द्राणि इहागच्छ इह तिष्ठ ततः पाद्यादिभिः संपूज्य । पश्चिमे शनेर्वामे श्वेतपुष्पाक्षतैः प्रजापतिमावाहयेत् । ॐ प्रजापते नत्वदेतान्यन्यो विश्वारूपाणि परिता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तुवयᳬस्याम पतयो रयी-णाम् ॥ ७ ॥ प्रजापते इहागच्छ इह तिष्ठ ततः पाद्यादिभिः संपूज्य । नैर्ऋत्यां राहोर्वामे कृष्णपुष्पाक्षतैर्नागमावाहयेत् । ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ये अंतरिक्षे ये दिवि तेभ्य÷ सर्पेभ्यो नम÷ । नाग इहागच्छ इह तिष्ठ ततो गंधादिभिः संपूज्य । वायव्यां केतोर्वामे श्वेतपुष्पाक्षतैः ब्रह्माणमावाहयेत् । ॐ ब्रह्मयज्ञानं प्रथमं

पुरस्ताद्विसीमतः सुरुचो वेन आवः । सबुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ ब्रह्मन् इहागच्छ इह तिष्ठ ततो गंधादिभिः संपूज्य । अथ पंचलोकानामावाहनम् । नैर्ऋत्यां राहोरुत्तरभागे पीतपुष्पाक्षतैः गणपतिमावाहयेत् । ॐ गणानां त्वा गणपतिꣳहवामहे प्रियाणान्त्वा प्रियपतिꣳहवामहे निधीनां त्वा निधिपतिꣳहवामहे वसोमम । आहमजानि गर्भध मात्वमजासि गर्भधम् ॥ भो गणेश इहागच्छ इह तिष्ठ । पश्चिमे शनेरुत्तरे रक्तपुष्पाक्षतैः दुर्गामावाहयेत् । ॐ जातवेदसे सुनवामसोममरातीयतो निदहाति वेदः । सनः पर्षदति दुर्गाणि विश्वा नावेव सिंधुं दुरितात्यग्निः ॥

दुर्गे इहागच्छ इह तिष्ठ मध्ये सूर्य्योत्तरे पीतपुष्पाक्षतैः वायुमावाहयेत् । ॐ वातो वामनो गंधर्वाः सप्तविꣳशति ते अग्रेश्वमयुञ्जँस्ते अस्मिन् जवमादधुः ॥ वायो इहागच्छ इह तिष्ठ पूर्वे शुक्रस्य पूर्वभागे नीलपुष्पाक्षतैः आकाशमावाहयेत् । ॐ घृतं घृत पावानः पिबत वसां वसा पावानः पिबन्तांतरिक्षस्य हविरासि स्वाहा । दिशः प्रदिशऽआदिशो विदिश उद्दिशो दिग्भ्यः स्वाहा । आकाश इहागच्छ इह तिष्ठ । नैर्ऋत्यां राहोर्दक्षिणे श्वेतपुष्पाक्षतैः अश्विनौ आवाहयेत् । ॐ या वां कशा मधुमत्यश्विना सुनृतावती । तया यज्ञं मिमिक्षतम् ॥ अश्विनाविहागच्छताम् इह तिष्ठताम् ।

अथ दशदिक्पालानामावाहनम्। पूर्वे ॐ त्रातारमिंद्रमवितारमिंद्रꣳ हवे हवे सुहवꣳ शूरमिंद्रम्। ह्वयामि शक्रं पुरुहूतमिंद्रꣳ स्वस्तिनो मघवा धात्विंद्रः॥ इन्द्र इहागच्छ इह तिष्ठ। आग्नेय्यां अग्निमावाहयेत्॥ ॐ त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्॥ अग्ने इहागच्छ इह तिष्ठ। याम्ये यममावाहयेत्। ॐ यमाय त्वा मखाय त्वा सूर्य्यस्य त्वा तपसे देवस्त्वा सविता मद्ध्वानक्तु पृथिव्याः सꣳस्पृशस्पाहि। अर्चिरसि शोचिरसि तपोसि॥ यम इहागच्छ इह तिष्ठ। नैर्ऋत्यां निर्ऋतिमावाहयेत्। ॐ असुन्वंतमयजमानमिच्छस्तेनस्ये-

त्यामन्विहि तस्करस्य। अन्यमस्मादिच्छसा तऽइत्या नमो देविनिर्ऋते तुभ्यमस्तु। निर्ऋते इहागच्छ इह तिष्ठ। पश्चिमे वरुणमावाहयेत्। ॐ वरुणस्योत्तंभनमसि। वरुणस्य स्कंभसर्जनीस्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद ॥ वरुण इहागच्छ इह तिष्ठ। वायवे वायुमावाहयेत्। ॐ आनोनियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम्। वायो अस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः ॥ वायो इहागच्छ इह तिष्ठ। उत्तरे कुबेरमावाहयेत्। ॐ वयꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावंतः सचेमहि ॥ कुबेर इहागच्छ इह तिष्ठ। ईशान्यां रुद्रमावाहयेत्।

ॐ तमीशानञ्जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा-नो यथा वेदसामसद्वृधेरक्षिता पायुरदब्धः स्वस्तये॥ ईशान इहागच्छ इह तिष्ठ। ईशानपूर्वयोर्मध्ये ब्रह्माणं आवाहयेत्। ॐ अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्त्ये भरहूत्यौ सजोषाः। यः शर्ठ्सते स्तुवते धायिपज्रऽइन्द्रज्येष्ठा अस्माँ२ऽअवंतु देवाः॥ ब्रह्मन् इहागच्छ इह तिष्ठ। नैर्ऋत्यवरुणयोर्मध्ये अनंतमावाहयेत्। ॐ स्योनापृथि-वीनो भवानृक्षरा निवेशनी यच्छा नः शर्म्म सप्रथाः॥ १॥ अनंत इहागच्छ इह तिष्ठ॥ अथ संकल्पः। अद्येह सकलशुभप्राप्तिकामसू-र्य्यादिनवग्रहाणामधिदेवतानां प्रत्यधिदेवतानां पंचलोकपालानां

दशदिक्पालानां पूजनमहं करिष्ये । गंधादिभिः संपूज्य। अथमा-
तृकापूजनम् । तत्रादौ देशकालौ संकीर्त्य क्रियमाणनूतनगृहप्रति-
ष्ठाकर्माङ्गभूतश्रीगणपतिसहितगौर्य्यादिषोडशमातृणामावाहनम् ।
आदौ गणपतिमावाहयेत्। गजवक्र गणाध्यक्ष सर्वविघ्नविनाशन।
लंबोदर त्रिनेत्र त्वमागच्छ गणनायक ॥ गणपते इहागच्छ इह
तिष्ठ। अथगौरीमावाहयेत् । हिमाद्रितनयां देवीं वरदां भैरवप्रियाम्।
लंबोदरस्य जननीं गौरीमावाहयाम्यहम्। अथ मन्त्रः । ॐ आयङ्गौः
पृश्निरक्रमादसदन्मातरम्पुरः । पितरं च प्रयन्त्स्वः ॥ १ ॥ गौरी-
मावाहयामि स्थापयामि ॥ सुवर्णाभां पद्महस्तां विष्णोर्वक्षस्थले

स्थिताम् । त्रैलोक्यपूजितां देवीं पद्मामावाहयाम्यहम् । अथ मंत्रः ।
हिरण्यरूपा उषसो विरोकऽउभाविंद्राऽउदिथः सूर्यश्च । आरोहतं वरु-
णमित्रगर्तं ततश्चक्षाथामदितिं दितिं च मित्रोऽसि वरुणोऽसि ॥ २ ॥
पद्मामावाहयामि स्थापयामि । शचीमावाहयेत् । उत्पलाक्षीं सुदर्शनां
शुचिकुंडलधारिणीम् । देवराजप्रियां भद्रां शचीमावाहयाम्यहम् ॥
अथ मंत्रः । ॐ कदाचनस्तरीरसिनेंद्रसश्च सिदाशुषे ॥ उपोपेन्नु मघ-
वन् भूय इन्नुते दानं देवस्य पृच्यते आदित्येभ्यः स्वाहा ॥ ३ ॥
शचीमावाहयामि स्थापयामि । मेधामावाहयेत् । विवस्वतकरो-
त्फुल्लां संस्थितां पद्मवासिताम् । बुद्धिप्रसादिनीं सौम्यां मेधामावा-

हयाम्यहम् । अथ मंत्रः । मेधां मे वरुणो ददातु मेधामग्निः प्रजापतिः । मेधामिंद्रश्च वायुश्च मेधां धाता ददातु मे स्वाहा ॥ ४ ॥ मेधामावाहयामि स्थापयामि । सावित्रीमावाहयेत् । जगत्स्रष्टां जगद्धात्रीं पक्षिरूपेण संस्थिताम् । ॐकाराक्षीं भगवतीं सावित्रीमावाहयाम्यहम् ॥ अथ मंत्रः । ॐ तत्सवितुर्व्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ ५ ॥ सावित्रीमावाहयामि स्थापयामि । विजयामावाहयेत् । दैत्यपक्षक्षयकरीं देवानां चाभयप्रदाम् । गीर्वाणवंदितां देवीं विजयामावाहयाम्यहम् ॥ अथ मंत्रः । व्विज्यं धनुः कपर्दिनो विशल्यो बाण वाँ३उत अनेशन्नस्य या इषव आभुरस्य निषंगधिः ॥ ६ ॥ विज-

यामावाहयामि स्थापयामि । जयामावाहयेत् । विश्वभद्रां जयां रक्तां रक्तांबरधरां सदा । त्रैलोक्यवंदितां देवीं जयामावाहयाम्य-हम् ॥ अथ मंत्रः । ॐ या ते रुद्र शिवा तनूरघोरापापकाशिनी तया नस्तन्वा शंतमया गिरिशंताभिचाकशीहि ॥ जयामावाहयामि स्थापयामि ॥ ७ ॥ देवसेनामावाहयेत् । मयूरवाहनारूढां शक्तिखड्ग-धनुर्धराम् । आवाहयेद्देवसेनां तारकासुरमर्दिनीम् ॥ अथ मंत्रः । ॐ देवानां भद्रा सुमतिर्ऋजूयतां देवानाꣳरातिरभि नो निवर्तताम् । देवानाꣳसख्यमुपसेदिमा व्वयं देवा न आयुः प्रतिरंतु जीवसे ॥ ८ ॥ देव-सेनामावाहयामि स्थापयामि । अथ स्वाहामावाहयेत् । कव्यमादाय

सततं पितृभ्यो या प्रयच्छति । पितृलोकार्चितां देवीं स्वधामावा-
हयाम्यहम् ॥ अथ मंत्रः । ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः ।
अक्षन् पितरोमीमदंत पितरोतीतृप्यन्त पितरः पितरः शुंद्धध्वम् ॥९॥
स्वधामावाहयामि स्थापयामि। अथ स्वाहामावाहयेत्। हविर्गृहीत्वा
सततं देवेभ्यो या प्रयच्छति । स्वर्गलोकार्चिता स्वाहा समागच्छ म-
माध्वरे॥ अथ मंत्रः। ॐ स्वाहायज्ञामिमक्षतः स्वाहोरोरंतरिक्षात् स्वाहा
द्यावापृथिवीभ्याᳫं स्वाहा व्वातादारभे स्वाहा॥ १० ॥ स्वाहामा-
वाहयामि स्थापयामि । मातरमावाहयेत् । भूतग्राममिमं कृत्स्नं
यया उत्पादितं वपुः। त्रैलोक्यपूजितां देवीं मातृरावाहयाम्यहम् ॥

अथ मंत्रः । आपो अस्मान् मातरःशुंधयंतु घृतेन नो घृतप्प्वः पुनंतु । विश्वर्ठ०ंहरिप्प्रंप्रवहंति देवीरुदिदाभ्यः शुचिरापूतएमि । दीक्षातपसोस्तनूरसितात्वा शिवार्ठ०ंशगमा परिदधे भद्रं व्वर्णं पुष्यन् ॥ मातृरावाहयामि स्थापयामि । अथ लोकमातृरावाहयेत् । आवाहयेल्लोकमातृर्जगत्पालनसंस्थिताः । शक्राद्यैर्वंदितां देवीं तत्रत्यैश्च सुरैरपि ॥ अथ मंत्रः । भवतन्नः समनसौ सचेतसावरयसौ । मायज्ञर्ठ०ंहिर्ठ०ंसिष्ठमा यज्ञपतिं जातवेदसौ शिवौ भवतमद्यनः । लोकमातृरावाहयामि । धृतिमावाहयेत् । नमस्तुष्टिकरीं देवीं लोकानुग्रहकारिणीम् । सर्वकामसुसिद्ध्यर्थं धृतिमावाहयाम्यहम् ॥

अथ मंत्रः । यत्प्रज्ञानमुत चेतोधृतिश्च यज्ज्योतिरंतरमृतं प्रजासु । य-
स्मान्नऽऋते किंचन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु । धृतिमा-
वाहयामि स्थापयामि ॥ अथ पुष्टिमावाहयेत् । प्रणता इहलोकेऽस्मि-
न्पुत्रपुष्टिसुखप्रदा । भक्तेभ्यश्चापि वरदा विद्युज्ज्वालार्ककुण्डला ॥
अथ मंत्रः । तत्वायामि ब्रह्मणा वंदमानस्तदाशास्ते यजमानो हविर्भिः ।
अहेडमानो वरुणेह बोध्युरुशꣳसमान आयुः प्रमोषीः । पुष्टिमावाहया-
मि स्थापयामि । अथ तुष्टिमावाहयेत् । आवाहयामि तां तुष्टिं सर्वलो-
केषु पूजिताम् । संतोषभावनादींश्च रक्षणायाध्वरे मम ॥ अथ मंत्रः ।
बृहस्पते परिदीया रथेन रक्षोहामित्राꣳऽअपबाधमानः । प्रभंजंत्सेनाः

प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् । तुष्टिं आवाहयामि स्थापयामि । देवीमावाहयेत् । तामात्मादिहितां देवीं सर्वकामफलप्रदाम् । वंशरक्षकरीं गोप्त्रीं देवीमावाहयाम्यहम् ॥ अथ मंत्रः । प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहा । अम्बे अम्बिकेऽम्बालिके नमानयति कश्चन सस्त्यः श्वकः सुभद्रकांकाम्पीलवासिनीम् ॥ १६ ॥ आत्मकुलदेवीमावाहयामि स्थापयामि । अथ मातृचक्रोद्धारः । पंचोर्द्ध्वाः पंच तिर्यक् च रेखाः कृत्वा विचक्षणैः । वायुचतुष्कमध्यस्थं गणेशं तत्र पूजयेत् ॥ मध्ये नैर्ऋत्यके कोणे गौरीपद्माग्निकोणके । शची पश्चिमतो मेधा सावित्री विजया यमे ॥ जयोत्तरे देवसेना

स्वधामीशानमेव च। स्वाहा चैव तथाग्नेय्यां मात्रिन्द्रे लोकमातरः॥ मध्ये वायुर्धृतिश्चैव नैर्ऋत्ये पुष्टिपूजनम्। तुष्टिश्चैव तु वायव्ये मध्ये तु कुलदेवता ॥ अथवसोर्धारा: । ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा। वाराही च तथैंद्राणी चामुण्डाः सप्त मातरः ॥ अथ मंत्रः। ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्र-धारम्। देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः। अस्य नूतनगृहकर्मणि सांगतासिद्ध्यर्थं वसोर्धारास-हिताः षोडशमातरहं पूजयिष्ये। ततो गंधादिभिः संपूजयेत्। अथ योगिनीपूजनम्। आवाहयाम्यहं देवीं योगिनीं परमेश्वरीम्।

योगाभ्यासेन संतुष्टा परध्यानसमन्विता ॥ दिव्यकुंडलसंकाशा दिव्यज्वाला त्रिलोचना। मूर्तिमती ह्यमूर्ता च उग्रा चैवोग्ररूपिणी ॥ अनेकभावसंयुक्ता संसारार्णवतारिणी। यज्ञं कुर्वंतु निर्विघ्नं श्रेयो यच्छंतु मातरः ॥ दिव्ययोगी महायोगी सिद्धयोगी गणेश्वरी। प्रेताशी डाकिनी काली कालरात्रिर्निशाचरी ॥ हूंकारी सिद्धवेताली खर्परी भूतगामिनी। ऊर्ध्वकेशी विरूपाक्षी शुष्कांगी मांसभोजिनी। फूत्कारी वीरभद्राक्षी धूम्राक्षी कलहप्रिया॥रक्ता च घोररक्ताक्षी विरू-पाक्षी भयंकरी। चौरिका मारिका चंडी वाराही मुंडधारिणी॥ भैरवी चक्रिणी क्रोधा दुर्मुखी प्रेतवासिनी। कालाक्षी मोहिनी चक्री कंकाली

भुवनेश्वरी ॥ कुंडला तालकौमारी यमदूती करालिनी । कौशिकी यक्षिणी यक्षी कौमारी यंत्रवाहिनी ॥ दुर्घटे विकटे घोरे कपाले विषलंघने । चतुःषष्टिसमाख्याता योगिन्यो हि वरप्रदाः ॥ त्रैलोक्ये पूजिता नित्यं देवमानुष्ययोगिभिः ॥ ततो गंधादिभिः संपूज्य ॥ अथ पंचॐकारपूजनम् ॥ आवाहयाम्यहं देवमोंकारं परमेश्वरम् । त्रिमात्रं त्र्यक्षरं देवं त्रिपदं च त्रिदैवकम् ॥ त्र्यक्षरं त्रिगुणाकारं सर्वाक्षरमयं शुभम् । त्र्यणवं प्रणवं हंसं स्रष्टारं परमेश्वरम् ॥ अनादिनिधनं देवमप्रमेयं सनातनम् । परं परतरं बीजं निर्मलं निष्कलं शुभम् ॥ अथ मंत्रः । ॐ आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसि जायतामाराष्ट्रे राजन्यः

शूर इषव्योतिव्याधिमहारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिपुरंधिर्योषा जिष्णुरथेष्ठाः सभेयो युवास्ययजमानस्य वरो जायतां निकामेन कामेनः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यंतां योगक्षेमो नः कल्पताम् । ततो गंधादिभिः संपूजयेत् । ततो नमस्कारः । ॐकारं बिंदुसंयुक्तं नित्यं ध्यायंति योगिनः। कामदं मोक्षदं चैव ॐकाराय नमो नमः॥ आवाहयामि ॥ अथ लक्ष्मीपूजनम् ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णंन्निषाणामुम्म इषाण सर्वलोकं म्म इषाण । लक्ष्मीं आवाहयामि स्थापयामि । ततो गंधादिभिः संपूजयेत् ।

अथ सप्तऋषिपूजनम् । गौतमोऽथ भरद्वाजो विश्वामित्रस्तथैव च । जमदग्निर्वसिष्ठश्च अत्रिः कश्यप एव च ॥ सप्तऋषीनावाहयामि स्थापयामि गंधादिभिः संपूज्य । अथ शेषनागपूजनम् । अथातः संप्रवक्ष्यामि यदुक्तं वास्तुपूजनम् । येन पूजाविधानेन कर्म्मसिद्धिस्तु जायते ॥ अनंतं पुण्डरीकाक्षं फणाशतविभूषितम् । विद्युद्बंधुकसाकारकूर्मारूढं प्रपूजयेत् ॥ ॐ नमोऽस्तु सर्पेभ्यो ये केचमनु अंतरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः । अथ सर्वतोभद्रमंडलदेवतानामावाहनम् । त्वं वै चतुर्मुखो ब्रह्मा सत्यलोके पितामहः । आगच्छ मंडले चास्मिन् मम सर्वार्थसिद्धये ॥ मध्ये ब्रह्माणं आवाहयामि स्थाप-

यामि ॥ १ ॥ क्षीरोदार्णवसंभूत लक्ष्मीबन्धो निशाकर । मंडले स्थापयाम्यत्र सोम सर्वार्थसिद्धये ॥ उत्तरे सोममावाहयामि स्थापयामि ॥ २ ॥ ईशानपालकं श्रेष्ठं सर्वलोकभयंकरम् । मंडले स्थापयामीह ईशानं सर्वसिद्धये ॥ ईशान्यामीशानमावाहयामि। स्थापयामि ॥ ३ ॥ सर्वलोकाधिकं श्रेष्ठं देवर्षीणां च पालकम् ॥ पूर्वदिक्पालकं देवराजानं स्थापयाम्यहम् ॥ पूर्वे इन्द्रमावाहयामि स्थापयामि ॥ ४ ॥ त्रिपादं मेषवाहं च त्रिशिखं च त्रिलोचनम् । आग्नेय्यां स्थापयाम्यत्र ह्यग्निं पुरुषमुत्तमम् ॥ आग्नेय्यामग्निमावाहयामि स्थापयामि ॥ ५ ॥ अंतकः सर्वलोकानां धर्मराज इति श्रुतः ।

अतस्त्वां स्थापयाम्यत्र दक्षिणस्यां स्थिरो भव ॥ दक्षिणे यम-मावाहयामि स्थापयामि ॥ ६ ॥ नैर्ऋत्यां वसतिर्यस्य घोररूपी सदा हि यः । नैर्ऋतिं स्थापयाम्यत्र नैर्ऋत्यां मंडले शुभे ॥ नैर्ऋत्यां निर्ऋतिमावाहयामि स्थापयामि ॥ ७ ॥ अपांपतिं पाशधरं यादसांपतिमुत्तमम् । वरुणं स्थापयाम्यत्र वारुण्यां मंडले शुभे ॥ पश्चिमे वरुणमावाहयामि स्थापयामि ॥ ८ ॥ आशुगं स्पर्शबोधं च गंधवाहं सुशीतलम् । मंडले स्थापयामीह वायव्यां वायुमु-त्तमम् ॥ वायव्यां वायुमावाहयामि स्थापयामि ॥ ९ ॥ धरो ध्रुवश्च सोमश्चाप्याशुगश्च नलोऽनलः । प्रत्यूषश्च प्रभावश्च वस्वष्टक-

मिहस्थिरम् ॥ वायुसोमयोर्मध्ये वसूनावाहयामि स्थापयामि ॥ १० ॥ त्रिनेत्राय त्रिरूपाय त्रिजटाय महात्मने । नमस्कृत्वा स्थापयामि मंडलोपरि मध्यतः ॥ सोमेशानयोर्मध्ये रुद्रमावाहयामि स्थापयामि ॥ ११ ॥ आदित्यं भास्करं चैव प्रभाकरदिवाकरौ ॥ सूर्य्यं ग्रहपतिं चैव ब्रध्नं तेजोहरिद्धरिम् ॥ सप्ताश्वं वेदमूर्तिं च त्रिदैवत्यं क्रमेण च। इत्यादिद्वादशादित्यान्मंडले स्थापयाम्यहम् ॥ ईशानेंद्रयोर्मध्ये द्वादशादित्यानावाहयामि स्थापयामि ॥ १२ ॥ अश्विनौ देववैद्यौ च सर्गस्थित्यंतकारकौ । मंडले स्थापयित्वा तु पूजयामीष्टसिद्धये॥इंद्राग्न्योर्मध्ये अश्विनावावाहयामि स्थापयामि

॥ १३ ॥ दैवे कर्मणि पित्र्ये च ये मुख्या सर्वदा शुभाः । मंडले स्थापयामीह सुखानुष्ठानसिद्धये ॥ अग्नियमयोर्मध्ये विश्वान् देवानावाहयामि स्थापयामि ॥ १४ ॥ यदृच्छया पर्यटंति यक्षराजा महीतले । कौतुकं प्रेक्षितुं चास्मिन्मंडले संतु सुस्थिराः । यमनिर्ऋत्योर्मध्ये यक्षानावाहयामि स्थापयामि ॥ १५ ॥ अनंतो वासुकिश्चैव कालीयो मणिभद्रकः । शंखश्च शंखपालश्च कर्कोटकधनंजयौ ॥ महाराष्ट्रश्च नागेशाः प्रगृह्णंतु ममार्चनम् ॥ निर्ऋतिवरुणयोर्मध्ये नागानावाहयाम्यहम् ॥ नागान् आवाहयामि स्थापयामि ॥ १६ ॥ उर्वशीप्रमुखाः सर्वाः स्ववेश्याः शक्रपूजिताः । गन्धर्वैश्च सहायंतु मंडलेऽस्मिन् सुशो-

नूतनगृहप्रवेशहवनपद्धतिः । ७५

भना: ॥ वरुणवाय्वोर्मध्ये गन्धर्वाप्सरसः आवाहयामि स्थापयामि ॥ १७ ॥ त्र्यंबकं त्रिपुरुषं नीलकंठं सदाशिवम् । मंडले स्थापयामीह सुखानुष्ठानसिद्धये ॥ ब्रह्मसोमयोर्मध्ये रुद्रमावाहयामि स्थापयामि ॥ १८ ॥ षडाननं चतुर्हस्तं स्कंदं गौरीसुतं शुभम् । इहैव पूजयिष्यामि सर्वकामार्थसिद्धये ॥ रुद्रसोमयोर्मध्ये स्कंदमावाहयामि स्थापयामि ॥ १९ ॥ शिवद्वारगतस्त्वं च शिववाहनमुत्तमम् । पार्वत्याः प्रीतिकृन्नित्यमिहागच्छ स्थिरो भव ॥ रुद्रसोमयोर्मध्ये शूलमहाकालौ आवाहयामि स्थापयामि ॥ २० ॥ अदितिर्देवमाता त्वं दक्षपुत्री सुशोभना । मंडलेऽस्मिन्समागच्छ यावत्

पूजा स्थिरा भव ॥ रुद्रसोमयोर्मध्ये अदितिमावाहयामि स्थापयामि ॥ २१ ॥ दक्षोऽसि सर्वकार्येषु महायज्ञकरप्रिय । ऋषिश्च सर्वदा दक्ष मंडलेऽस्मिन् स्थिरो भव ॥ रुद्रसोमयोर्मध्ये दक्षमावाहयामि स्थापयामि ॥ २२ ॥ तामग्निवर्णां तपसा ज्वलंतीं सर्वदा शुभाम् । भक्तानां वरदां नित्यं दुर्गामावाहयाम्यहम् ॥ ब्रह्मेंद्रयोर्मध्ये दुर्गामावाहयामि स्थापयामि ॥ २३ ॥ कृष्णाय गोपीनाथाय चक्रिणे मुरवैरिणे ॥ नमस्तुभ्यं जगद्धातर्मंडलेऽस्मिन् स्थिरो भव ॥ ब्रह्मेंद्रयोर्मध्ये कृष्णमावाहयामि स्थापयामि ॥ २४ ॥ ब्रह्माग्न्योर्मध्ये स्वधामावाहयामि स्थापयामि ॥ २५ ॥ मृत्युरोगानंतकस्य प्रेष्यान्

प्राणहरान् गणान् । मंडले स्थापयामीह पूजार्थं लोकनाशकान् ॥
ब्रह्मयमयोर्मध्ये मृत्युरोगानावाहयामि स्थापयामि ॥ २६ ॥
कुंकुमाभं सदानंदं भक्तसंकटनाशनम् । चतुर्बाहुं त्रिनेत्रं च मंडले
स्थापयाम्यहम् ॥ ब्रह्मनिर्ऋत्योर्मध्ये गणेशमावाहयामि स्थाप-
यामि ॥२७॥ पावनाः सर्वलोकानां निमग्नाः शुद्धिकारकाः । सर्व-
पापहराः श्रेष्ठा मंडले स्थापयाम्यहम् ॥ ब्रह्मवरुणयोर्मध्ये जलमा-
वाहयामि स्थापयामि ॥ २८ ॥ सुगंधिनश्च शैलाद्या मंदमंदवहाः
सदा । तानहं स्थापयामीह मरुतो मंडले शुभे ॥ ब्रह्मवाय्वोर्मध्ये
मरुतः आवाहयामि स्थापयामि ॥ २९ ॥ पृथिव्या धार्यते विश्वं

दुर्ग्रहं सागरैर्नरैः। अतस्त्वां स्थापयामीह ब्रह्मणो मंडले पदे ॥ ब्रह्मणः पादमूले पृथिवीं आवाहयामि स्थापयामि ॥ ३० ॥ गंगे च यमुने चैव गोदावरि सरस्वति। नर्मदे सिंधुकावेर्यौ मंडले स्थापयाम्यहम् ॥ ब्रह्मणः पादमूले नदीमावाहयामि स्थापयामि ॥ ३१ ॥ समुद्राः सर्वतोयेषु श्रेष्ठा वै हरिवल्लभाः । मंडले स्थापयामीह तान्नदीशान्सुखाप्तये ॥ ब्रह्मणः समंतात् सप्तसागरानावाहयामि स्थापयामि । ते के क्षारसागरं क्षीरसागरं दधिसागरं मधुसागरं घृतसागरं इक्षुसागरं सुरासागरं स्वादूदकसागरं ॥ ३२ ॥ तदुपरि मेरुनाममंत्रेण पूर्वादिदिक्ष इन्द्राणीं स्वाहां प्रथमां नैर्ऋतिं वारुणीं वायवीं कुबेरप्रियां

रुद्राणीं पूर्वादिदिक्षु वज्रं शक्तिं दंडं खड्गं पाशं अंकुशं गदां त्रिशूलम् ॥ ३३ ॥ पुनः पूर्वादिदिक्षु गजं मेषं महिषं शवं मकरं मृगं नरं वृषभम् ॥ ३४ ॥ पुनः पूर्वादिदिक्षु ऐरावतं पुंडरीकं वामनं कुमुदमंजनं पुष्पदंतं सार्वभौमं सुप्रतीकम् ॥ ३५ ॥ पुनः पूर्वादिदिक्षु गणपतिं समन्ततः। दुर्गां क्षेत्राधिपतिम् । पुनः पूर्वाद्यष्टदिक्षु कश्यपमत्रिं भरद्वाजं विश्वामित्रं गौतमं जमदग्निं वसिष्ठं अरुंधतीम्। बाह्ये पूर्वादिक्रमेण ऐंद्रीं कौमारीं ब्राह्मीं वाराहीं चामुंडां वैष्णवीं माहेश्वरीं वैनायिकीं इति आवाह्य ततः पाद्यादिभिः षोडशोपचारैः संपूज्य नतिं कुर्यात्। मध्ये ब्रह्मणे नमः ब्रह्माणं गंधादिभिः॥ १॥ ॐ

उत्तरे सोमाय नमः सोमं गंधा० ॥२॥ ईशाने ईशानाय नमः ईशानं गं-
धा० ॥ ३ ॥ पूर्वे इन्द्राय नमः इद्रं गंधादिभिः संपूज्य ॥४॥ आग्नेये अ-
ग्नये नमः अग्निं गंधा० ॥५॥ दक्षिणे यमाय नमः यमं गंधा० ॥६॥ नैर्ऋ-
त्ये निर्ऋतये नमः निर्ऋतिं गंधा० ॥ ७ ॥ पश्चिमे वरुणाय नमः वरुणं
गंधा० ॥ ८ ॥ वायव्ये वायवे नमः वायुं गंधा० ॥ ९ ॥ वायुसोमयो-
र्मध्ये अष्टवसुभ्यो नमः अष्टवसून् गंधा० ॥ १० ॥ सोमइन्द्रयो-
र्मध्ये एकादशरुद्रेभ्यो नमः एकादशरुद्रान् गंधा० ॥ ११ ॥ ईशाने-
द्रमध्ये द्वादशादित्येभ्यो नमः द्वादशादित्यान् गंधा० ॥ १२ ॥ इद्रा-
ग्निमध्ये अश्विभ्यां नमः अश्विनौ गंधा० ॥ १३ ॥ अग्नियमयोर्मध्ये

विश्वेभ्यो देवेभ्यो सपैतृकेभ्यो नमः विश्वान् देवान् सपैतृकान् गंधा० ॥१४॥ यमनिर्ऋतिमध्ये सप्तर्षिभ्यो नमः सप्तर्षीन् गंधा० ॥ १५ ॥ निर्ऋतिवरुणमध्ये भूतनागेभ्यो नमः भूतनागान् गंधा० ॥ १६ ॥ वरुणवायुमध्ये गंधर्वाप्सरोभ्यो नमः गंधर्वाप्सरसो गंधा० ॥ १७ ॥ ब्रह्मसोममध्ये स्कंदाय नमः स्कंदं गंधा० ॥ १८ ॥ उत्तरे ऋषभाय नमः ऋषभं गंधा० ॥ १९ ॥ तदुत्तरे शूलमहाकालाभ्यां नमः शूलमहाकालौ गंधा० ॥२०॥ ब्रह्मेशानयोर्मध्ये दक्षादिसप्तगणेभ्यो नमः दक्षादिसप्तगणान् गंधा० ॥२१॥ ब्रह्मेंद्रयोर्मध्ये दुर्गायै नमः दुर्गां गंधा० ॥ २२ ॥ पूर्वे विष्णवे नमः

विष्णुं गंधा० ॥ २३ ॥ ब्रह्मास्योर्मध्ये स्वधायै नमः स्वधां गंधा० ॥ २४ ॥ ब्रह्मयममध्ये मृत्युरोगेभ्यो नमः मृत्युरोगान् गंधा० ॥२५॥ ब्रह्मनैर्ऋतयोमध्ये गणपतये नमः गणपतिं गंधा० ॥ २६ ॥ ब्रह्म-वरुणयोर्मध्ये अद्भ्यो नमः अपः गंधा० ॥ २७ ॥ ब्रह्मवायुमध्ये मरुद्भ्यो नमः मरुतो गंधा० ॥ २८ ॥ ब्रह्मणः पादमूले कर्णिकायां पृथिव्यै नमः पृथिवीं गंधा० ॥ २९ ॥ तत्रैव सप्तसागरेभ्यो नमः सप्त-सागरान् गंधा० ॥ ३० ॥ तत्र गंगादिसप्तसरिद्भ्यो नमः गंगादिसप्त-सरिता गंधा० ॥ ३१ ॥ उत्तरे मेरवे नमः मेरुं गंधा० ॥ ३२ ॥ बाह्य-परिधौ सोमादिसन्निधौ क्रमेणायुधानामावाहनम् । गदायै नमः गदां

गंधा० ॥ ३३ ॥ त्रिशूलाय नमः त्रिशूलं गंधा० ॥ ३४ ॥ वज्राय नमः वज्रं गंधा० ॥ ३५ ॥ शक्तये नमः शक्तिं गन्धा० ॥ ३६ ॥ दंडाय नमः दंडं गंधा० ॥ ३७ ॥ खड्गाय नमः खड्गं गंधा० ॥ ३८ ॥ पाशाय नमः पाशं गंधा० ॥ ३९ ॥ अंकुशाय नमः अंकुशं गंधा० ॥ ४० ॥ तद्बाह्ये उत्तरादौ गौतमाय नमः गौतमं गंधा० ॥ ४१ ॥ भारद्वाजाय नमः भारद्वाजं गंधा० ॥ ४२ ॥ विश्वामित्राय नमः विश्वामित्रं गंधा० ॥ ४३ ॥ कश्यपाय नमः कश्यपं गंधा० ॥ ४४ ॥ जमदग्नये नमः जमदग्निं गंधा० ॥ ४५ ॥ वसिष्ठाय नमः वसिष्ठं गंधा० ॥ ४६ ॥ अत्रये नमः अत्रिं गंधा० ॥ ४७ ॥ अरुंधत्यै नमः अरुंधतीं गंधादि०

॥ ४८ ॥ तद्बहिः पूर्वादिदिक्षु अग्निकोणे कौमार्यै नमः गंधा० ॥ ४९ ॥ ब्राह्म्यै नमः० ॥५०॥ वाराह्यै नमः गंधा० ॥ ५१ ॥ माहेश्वर्यै नमः० ॥ ५२ ॥ इंद्राण्यै नमः गंधा० ॥५३ ॥ चामुण्डायै नमः ग० ॥ ५४ ॥ ततो मध्ये ताम्रमयकलशं यज्ञनारायणमूर्त्या सह स्थापयेत् विष्णोरराटमसि इत्यनेन मंत्रेणावाहयित्वा पंचोपचारपूजां कुर्य्यात्। इति सर्वतोभद्रः ॥ अथ वास्तुमंडलदेवतानामावाहनम् । नेत्रत्रयसमायुक्तं स्वाहोमासहितं विभुम् । आगच्छ त्वं शिखिन् देव क्षेत्रेऽस्मिन् सन्निधो भव ॥ शिखिनमावाहयामि स्थापयामि ॥ १ ॥ आवाहयामि पर्जन्यं यादसां मख्यनायकम् । कुंभीरथसमारूढं पा-

शहस्तं वरप्रदम् ॥ पर्जन्यमावाहयामि स्थापयामि ॥ २ ॥ आवाह-
यामि तं देवं महेन्द्रतनयं प्रभुम् । मुद्रिकाकंकणैर्युक्तं सर्वाभरणभूषि-
तम् ॥ वरदाभयहस्तं च जयंतं पूजयाम्यहम् ॥ जयंतमावाहयामि
स्थापयामि ॥ ३ ॥ एहि देव सहस्राक्ष देवारिबलसूदन । ऐरावतेश स-
र्वज्ञ शचीहृदयनंदन ॥ वज्रहस्त सुराध्यक्ष इंद्रमावाहयाम्यहम् ॥ इन्द्र-
मावाहयामि स्थापयामि ॥ ४ ॥ आवाहयामि देवेशं भास्करं ति-
ग्मतेजसम् । कलिंग काश्यपं रक्तं सप्ताश्वं सप्तरज्जुकम् ॥ द्विभुजं
पद्महस्तं च त्रैलोक्यतिमिरापहम् । सर्वसौख्यस्य दातारं कर्मसा-
क्षिणमीश्वरम् ॥ आगच्छ भगवन् सूर्य्य क्षेत्रेऽस्मिन्सन्निधो भव ॥

सूर्य्यमावाहयामि स्थापयामि ॥ ५ ॥ आवाहयामि तं सत्यं पुण्य-युक्तमकल्मषम् । पद्महस्तं महाबाहुं वरदं निर्मलं शुभम् ॥ ज्ञानमुद्रा-धरं देवं चिंतितं ब्रह्म केवलम् । आगच्छ देव सत्यस्त्वं क्षेत्रेऽस्मिन् सन्निधो भव ॥ सत्यमावाहयामि स्थापयामि ॥ ६ ॥ आवाहयेयं भृशमादिदेवं संचारशीलं भुवनत्रयेऽपि । एकेन हस्तेन वरप्रदानं गदां दधानं च परेण तेन ॥ भृशमावाहयामि स्थापयामि ॥ ७ ॥ आ-वाहये तमाकाशं विष्णोः पदमनंतकम् । यत्र देवास्तथा यज्ञा ग्रहाः सर्वे प्रतिष्ठिताः ॥ आगच्छ त्वं महाकाश क्षेत्रेऽस्मिन्सन्निधो भव ॥ आकाशमावाहयामि स्थापयामि ॥ ८ ॥ आवाहयामि देवेशं भूतानां

देहधारणम् । आगच्छ भगवन् वायो क्षेत्रेऽस्मिन् सन्निधो भव ॥ वायुमावाहयामि स्थापयामि ॥ ९ ॥ आवाहयामि देवेशं पद्महस्तं वरप्रदम् । रक्तवस्त्रपरीधानं विद्युद्वर्णं महाबलम् ॥ आगच्छ भगवन् पूषन् क्षेत्रेऽस्मिन् सन्निधो भव ॥ पूषाणमावाहयामि स्थापयामि ॥ १० ॥ आवाहये त्वां वितथं पुराणं द्यावापृथिव्यंतरचारिणं च । गृहाण पूजां चणकोदनाख्यं बलिं च गृह्णन् भगवन्नमस्ते ॥ वितथमावाहयामि स्थापयामि ॥ ११ ॥ आवाहयामि त्वां देव गृहक्षतसमाख्यक । पूजां गृहाण देवेश मम स्वस्तिकरो भव ॥ गृहक्षतमावाहयामि स्थापयामि ॥ १२ ॥ आवाहयामि देवेशं दक्षिणां दिशमा-

श्रितम्। महिषे च समारूढमञ्जनाद्रिसमप्रभम् ॥ चित्रगुप्तसहायं तं दण्डमुद्गरधारिणम्। सप्तर्षिभिः समायुक्तं धर्म्माधर्म्मप्रवर्तकम् ॥ लोकस्य यमनार्थाय किंकरैः परिवारितम्। आगच्छ भगवन् धर्म्म क्षेत्रेऽस्मिन्सन्निधो भव ॥ यममावाहयामि स्थापयामि ॥ १३ ॥ आवाहयामि देवेशं षड्जादिगानतत्परम्। वीणां गृहीत्वा हस्तेन तद्वादनरतं विभुम् ॥ अप्सरोगणसंकीर्णं नानागंधैश्च चर्चितम्। गंधर्व त्वमिहागच्छ पूजेयं प्रतिगृह्यताम् ॥ गंधर्वमावाहयामि स्थापयामि ॥ १४ ॥ आवाहयामि तं देवं भृंगराजं महाबलम्। षट्-पदैः सेव्यमानं च कुसुमामोदसंरतम् ॥ आगच्छालिकुल त्वं हि क्षेत्रेऽ-

स्मिन्सन्निधो भव ॥ भृंगराजमावाहयामि स्थापयामि ॥ १५ ॥ मृगमावाहयिष्यामि शशांककृतचिह्नकम् ॥ कृष्णवर्णचतुष्पादं श्वेतोदरविषाणकम् ॥ आगच्छ भगवन्नेण क्षेत्रेऽस्मिन् संनिधो भव ॥ मृगमावाहयामि स्थापयामि ॥ १६ ॥ पितॄनावाहयिष्यामि सोमपाद्याननुक्रमात् । पिंगाक्षान् कपिलजटान् हस्ते कुशकमंडलून् ॥ दधानान् सितवस्त्राणि सितयज्ञोपवीतिनः । गृह्णानान् कुशरान्नं च पितॄन् संपूजयाम्यहम् । पितॄनावाहयामि स्थापयामि ॥ १७ ॥ एह्येहि दौवारिक रक्षणाय द्वाराणि सर्वाणि च मंदिरस्य । पैष्टं बलिं वासितदंतकाष्ठं गृहाण पूजां भगवन्नमस्ते ॥ दौवारिकमावाहयामि ॥ स्थापयामि

॥१८॥ आवाहये त्वां कपिमध्यमुख्यं सुग्रीवराजं मम मंडलेऽस्मिन्। पाषाणवृक्षौ दधतं कराभ्यां गृहाण पूजां भगवन्नमस्ते ॥ सुग्रीवमावाहयामि स्थापयामि॥ १९ ॥ आवाहयामि देवेशं पुष्पदंतं विनायकम्। लंबोदरं महाकायं गजवक्त्रं चतुर्भुजम् ॥ सिद्धिबुद्धिसमायुक्तं सर्वविघ्नविनाशनम्। पुष्पदंतसमायुक्तं पूजेयं प्रतिगृह्यताम् ॥ गणेशमावाहयामि स्थापयामि ॥ २० ॥ आवाहयामि देवेशं वरुणं जलनायकम् । कुंभीरथसमायुक्तं श्वेताद्रिशिखरोपमम् ॥ पाशहस्तं महाबाहुं यादोगणसमन्वितम् । आगच्छ वरुणस्त्वं हि क्षेत्रेऽस्मिन् सन्निधोभव ॥ वरुणमावाहयामि स्थापयामि

॥ २१ ॥ असुरत्वमिहागच्छ रक्षोगणसमन्वित । शक्तिशूलधरो नित्यं रक्ताक्षश्च महाबलः ॥ हिरण्यपाशभृद्देव पूजां स्वीकुरु मे प्रभो ॥ असुरमावाहयामि स्थापयामि ॥ २२ ॥ आवाहयामि देवेशं पातालतलवासिनम् । सहस्रशिरसं नागं फणामणिविराजि-तम् ॥ कर्पूरविशदं देहं नागराजं महाबलम् । परोपकारनिरतमनंतं विष्णुवाहनम् ॥ आगच्छ नागराज त्वं क्षेत्रेऽस्मिन् सन्निधोभव ॥ नागमावाहयामि स्थापयामि ॥ २३ ॥ आवाहयामि तं पापं नाम्ना यक्ष्मेति विश्रुतम् । निर्मांसं निर्घृणं शक्तिपाशपाणिं महाबलम् ॥ आगच्छ भगवन् पाप पूजेयं प्रतिगृह्यताम् ॥ पापमावाहयामि

स्थापयामि ॥ २४ ॥ आवाहयामि तं रोगं वातादित्रिगुणात्मकम् । त्रिपादं त्रिशिखं रक्तनेत्रं भस्मविभूषितम् ॥ लोकानां च सुखं देहि बलिभिर्घृतभोजनैः । पूजां गृहाण भो रोग क्षेत्रेऽस्मिन् सन्निधो भव ॥ रोगमावाहयामि स्थापयामि ॥ २५ ॥ अहिमावाहयिष्यामि त्रैलोक्यांतरचारिणम् । शेषकुलसमुद्भूतं लसत्कर्णमहीश्वरम् ॥ आगच्छ नागराज त्वं क्षेत्रेऽस्मिन् सन्निधो भव ॥ अहिमावाहयामि स्थापयामि ॥ २६ ॥ आवाहयामि तं शैवं गणानां मुख्यनायकम् । जटाजूटधरं सौम्यं शूलपट्टिशधारिणम् ॥ नमस्ते मुख्यदेवेश क्षेत्रेऽस्मिन् सन्निधो भव ॥ मुख्यमावाहयामि स्थापयामि ॥ २७ ॥

आवाहयामि देवेशं भल्लाटं विश्वरूपिणम् । भिल्लवेषधरं कृष्णं धनुर्बाणासिधारिणम् ॥ भिल्लमोहनकर्त्तारं बर्हिपिच्छैस्त्वलंकृतम् । अगच्छ भगवन् देव क्षेत्रेऽस्मिन् सन्निधो भव ॥ भल्लाटमावाहयामि स्थापयामि ॥ २८ ॥ आवाहयामि देवेशं शशांकं रजनीपतिम् । क्षीरोदधिसमुद्भूतं हरमौलिविराजितम् ॥ सुधाकरं द्विजाधारं त्रैलोक्यप्रियकारकम् । औषध्याप्यायनकरं सोमं कंदर्पवर्द्धनम् ॥ आगच्छ भगवन् सोम क्षेत्रेऽस्मिन् सन्निधो भव ॥ सोममावाहयामि स्थापयामि ॥ २९ ॥ आवाहयामि तं नागं फणासप्तकसंयुतम् । आगच्छोरगराज त्वं क्षेत्रेऽस्मिन् संनिधो भव ॥

सर्पमावाहयामि स्थापयामि ॥ ३० ॥ आवाहयामि तां देवीमदितिं देवमातरम् । द्विभुजां पद्महस्तां च सर्वाभरणभूषिताम् ॥ कश्यपस्य प्रियां भार्यां सुरूपां वामलोचनाम् । आगच्छ ह्यदिते त्वं हि क्षेत्रेऽस्मिन् संनिधा भव ॥ अदितिमावाहयामि स्थापयामि ॥ ३१ ॥ दितिमावाहयिष्यामि दैत्यानां चैव मातरम् । शुक्लांगीं द्विभुजां चैव शूलपट्टिशधारिणीम् ॥ समागच्छ दिते त्वं हि क्षेत्रेऽस्मिन्संनिधा भव ॥ दितिमावाहयामि स्थापयामि ॥ ३२ ॥ अप आवाहयिष्यामि सर्वदा वरदाः शिवाः । आपस्त्वायांतु सततं पवित्रा मंगलावहाः ॥ समागच्छत युयं वै कुर्वंतयः

पावनं जगत् ॥ अप आवाहयामि स्थापयामि ॥ ३३ ॥ आपवत्स त्वमेह्येहि कर्मस्कंधवरप्रद । पूजां गृहाण देवेश कुंभहस्त नमोऽस्तु ते ॥ आपवत्समावाहयामि स्थापयामि ॥ ३४ ॥ अर्य्यमन् कुरु मे भद्रं संज्ञया सह भद्रया। गृहाणेमां मया दत्तां पूजां देव नमोऽस्तु ते ॥ अर्य्यमणमावाहयामि स्थापयामि ॥ ३५ ॥ आवाहयेत्सवितृमंडलमध्यसंस्थं सप्ताश्ववाहनयुतं घृतपंकजं त्वाम् । केयूरकुंडलविधारक देहि सौख्यं पूजां गृहाण भगवन् सवितर्न्नमस्ते ॥ सवितारमावाहयामि स्थापयामि ॥ ३६ ॥ सावित्र त्वमिहागच्छ सर्वध्वांतनिवारक । पूजां गृहाण देवेश मया शक्त्या प्रकल्पिताम् ॥

सावित्रमावाहयामि स्थापयामि ॥ ३७ ॥ एह्येहि सोम त्रिगुणात्मक त्वं हयं समारुह्य तमो नुदन्वै । हस्तद्वये वै धृतचक्रपद्म गृहाण पूजां भगवन्नमस्ते ॥ विवस्वंतमावाहयामि स्थापयामि ॥ ३८ ॥ एह्येहि वास्तोर्विबुधाधिप त्वं गजाधिरूढो मम रक्षणाय । वराप्सरोभिश्च विजीयमानो गृहाण पूजां भगवन्नमस्ते ॥ विबुधाधिपमावाहयामि स्थापयामि ॥ ३९ ॥ आवाहयामि तं देवं जयं यष्टिविधारकम् । जय त्वं हि समागच्छ क्षेत्रेऽस्मिन् संनिधो भव ॥ जयमावाहयामि स्थापयामि ॥ ४० ॥ मित्र त्वमेह्येहि तमोपशांत्यै पद्मासनः पद्मकरोऽसि नित्यं । गृहाण पूजां घृतमोदकादिभिर्मित्रोनमंत्रैर्भग-

वन् नमस्ते ॥ मित्रमावाहयामि स्थापयामि ॥ ४१ ॥ आवाह-
यामि तं देवं यक्ष्माणं राजसंज्ञकम् । नानाव्याधिसमाकीर्णं रोगैश्च
परिशोभितम् ॥ वामेन वरदं चैव दक्षिणेन धनप्रदम् । आगच्छ भग-
वन् यक्ष्मन् पूजेयं प्रतिगृह्यताम् ॥ राजयक्ष्माणं आवाहयामि
स्थापयामि ॥ ४२ ॥ आवाहयामि तं रुद्रं सर्वदा शंकरं विभुम् । उमा-
धिष्ठितवामांगं वरदाभयहस्तकम् ॥ जटागंगाधरं सौम्यं कर्पूराद्रि-
समप्रभम् । आगच्छ भगवन् रुद्र क्षेत्रेऽस्मिन् सन्निधो भव ॥ रुद्र-
मावाहयामि स्थापयामि ॥ ४३ ॥ पृथ्वीधर त्वं मम मंडलेऽस्मि-
न्नाधारभूतो जगतीतलस्य । स्थित्वा वरं देहि सुखप्रद त्वं गृहाण

पूजां भगवन्नमस्ते ॥ पृथ्वीधरमावाहयामि स्थापयामि ॥ ४४ ॥
आवाहयामि देवेशं मूर्द्धभागे व्यवस्थितम् । हंसयुक्तरथारूढं कोटि-सूर्य्यसमप्रभम् ॥ चतुर्मुखं चतुर्बाहुं चतुर्वेदसमान्वितम् । पुस्तकं चाक्षसूत्रादि दधानं च कमंडलुम् ॥ विश्वकर्म्मेति नामानं देवतागण-पूजितम् । आगच्छ भगवन् ब्रह्मन् क्षेत्रेऽस्मिन् सन्निधो भव ॥ ब्रह्मा-णमावाहयामि स्थापयामि । वास्तुकोष्टं दृष्ट्वा तदनुसारेण गंधादीन् दद्यात् । तदनंतरं सुवर्णमयवास्तुमूर्तिं स्थापयेत् तत्पश्चात् आ-वाहनं कुर्य्यात् ॥ ॐ वास्तोष्पते प्रतिजानीत् ह्यास्मान्स्वावेशो अनमीवोभवा नः यत्वेमहे प्रतितन्नो भव द्विपदे शं चतुष्पदे ॥ वास्तु-

मावाहयामि स्थापयामि ततः गंधादिभिः पूजयेत् । ततो नतिं कुर्यात् । वास्तुपुरुषो नमस्तुभ्यं भूशय्यां वरदो भव । मद्गृहे धन-धान्योऽस्तु समृद्धिं कुरु सर्वदा ॥ इति वास्तु । अथ संकल्पः । ततः कालज्ञानं कृत्वा नवगृहमखकर्म्मणि इदं होमद्रव्यं सूर्य्यादीनां नव-ग्रहाणामीश्वराद्यदेवतानामग्न्यादिप्रत्यधिदेवतानां गणेशादिपंच-लोकपालानामिंद्रादिदशदिक्पालानां ब्रह्मविष्णुशिवगणपतिदुर्गा-लक्ष्मीसरस्वतीक्षेत्रपालपंचभूतविश्वकर्म्मणां गौर्य्यादिषोडशमा-तृणामन्येषामपि स्थापितदेवानां स्वस्वलिङ्गोक्तमंत्राहुतिभिर्हो-मार्थमहं यजे । अथ कुशकण्डिकारंभः । ॐ अद्य कर्तव्यहोमकर्म्मणि

कृताकृतावेक्षणरूपब्रह्मकर्म्म कर्तुममुकगोत्रममुकशर्म्माणं ब्राह्मण-मेभिश्चंदनपुष्पाक्षतफलद्रव्यवासोभिः ब्रह्मत्वेन त्वामहं वृणे ॥ ॐ वृतोस्मीति प्रतिवचनम् । ॐ वृतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षि-णाम् । दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते । ॐ यथाविहितं कर्म कुरु । ॐ यथाज्ञानं करवाणि इति । ततो अग्नेर्दक्षिणतः शुद्ध-मासनं दत्त्वा तदुपरि प्रागग्रान् कुशानास्तीर्य ब्राह्मणमग्निप्रदक्षिण-क्रमेणानीयात्र त्वमेव ब्रह्मा भवेत्यभिधाय कल्पितासने उपवेशयेत् । ततः प्रणीतापात्रं पुरतः कृत्वा जलेनापूर्य्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोकय अग्नेरुत्तरतः कुशोपरि निदध्यात् । ततः परिस्तरणं

बर्हिषश्चतुर्थभागमादाय आग्नेय्यादीशानांतं ब्रह्मणोऽग्निपर्यंतं नैर्ऋ-
त्याद्वायव्यांतं अग्नितः प्रणीतापर्य्यंतं ततोऽग्नेरुत्तरतः पश्चिमदिशि
पवित्रच्छेदनार्थं कुशत्रयं पवित्रकरणार्थं साग्रमनंतर्गर्भकुशपत्रद्वयं
प्रोक्षणीपात्रं आज्यस्थालीसंमार्जनार्थं कुशत्रयं उपयमनार्थं वेणी-
रूपकुशत्रयं प्रादेशमात्रं समिधस्तिस्रः स्रुवः आज्यं षट्पंचाशदुत्त-
रमुष्टिशतद्वयावच्छिन्नतंडुलपूर्णपात्रं ततः पवित्रच्छेदनकुशानां
पूर्वदिशि क्रमेणासादनीयम् । तस्यामेव दिशि असाधारणवस्तू-
न्युपकल्पनीयानि । पवित्रच्छेदनकुशैः पवित्रे च्छित्वा प्रादेशमि-
तपवित्रकरणं सपवित्रहस्तेन प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय

अनामिकाङ्गुष्ठाभ्यामुत्तराग्रे पवित्रे धृत्वा त्रिरुत्पवनं प्रणीतोदकेन प्रोक्षणीप्रोक्षणं प्रोक्षणीजलेन आसादितवस्तुसेचनं अग्निप्रणीतयो-र्मध्ये प्रोक्षणीपात्रं निधाय आज्यस्थाल्यामाज्यं निरूप्य ततोऽ-धिश्रयणं ततस्तृणं प्रज्वाल्याग्निप्रदक्षिणं भ्रामयित्वा अग्नौ तत् प्रक्षिप्य स्रुवप्रतपनं कृत्वा संमार्जनकुशानामग्रैरंतरतो मूलैर्बाह्यतः स्रुवं संमार्जितं प्रणीतोदकेनाभ्युक्ष्य पुनः प्रताप्य स्रुवं दक्षिणतो निदध्यात्। तत आज्यस्याग्नेरवतारणं तत आज्ये प्रोक्षणीवदुत्प-वनं अवेक्ष्य सत्यपद्रव्ये तन्निरसनं पुनः प्रोक्षण्युत्पवनं तत उपय-मनकुशान् वामहस्ते कृत्वा उतिष्ठन् प्रजापतिं मनसा ध्यात्वा

तूष्णीमग्नौ घृताक्ताः समिधास्तिस्रः प्रक्षिपेत् तत उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेण अग्निं पर्युक्षणं कृत्वा प्रणीतापात्रे पवित्रे निधाय पातितदक्षिणजानुः कुशाग्रेण ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाज्याहुतीर्जुहोति । तत्तदाहुत्यनंतरं स्रुवावस्थितघृतशेषस्य प्रोक्षणीपात्रे प्रक्षेपः । अथ स्रुवपूजनम् । ॐ आवाहयाम्यहं देवं स्रुवं शेवधिमुत्तमम् । स्वाहाकारस्वधाकारवषट्कारसमन्वितम् ॥ अष्टांगुलं त्यजेन् मूलमग्रे त्यक्त्वा दशांगुलम् । कर्तव्यं गोपदाकारं दंडस्याग्रे तु कंकणम् ॥ विष्णोः स्थानं प्रगृह्णीयात् हूयते च हुताशनम् । पद्मयोनिं समादाय होता सुखमवाप्नुयात् ।

ततः स्रुववरणं वृतोऽस्मीति मंत्रेण। अथाज्याहुतीः॥ ॐ प्रजापतये स्वाहा इदं प्रजापतय इति मनसा॥ ॐ इन्द्राय स्वाहा इदमिंद्राय इत्याघारौ॥ ॐ अग्नये स्वाहा इदमग्नये। ॐ सोमाय स्वाहा इदं सोमाय। इत्याज्यभागौ॥ ॐ भूः स्वाहा इदं भूः। ॐ भुवः स्वाहा इदं भुवः। ॐ स्वः स्वाहा। एता महाव्याहृतयः। ॐ तन्नो-ऽग्ने वरुणस्य विद्वान् देवस्य हेडो अवयासिसीष्ठाः। यजिष्ठो वह्नि-तमः शोशुचानो विश्वाद्वेषाꣳसि प्रमुमुग्ध्यस्मत्स्वाहा। इदमग्नी-वरुणाभ्यां नमः। ॐ सत्वन्नो अग्ने वमोभवोतीनेदिष्टो अस्या उषसो व्युष्टौ। अवयक्ष्वनो वरुणꣳरराणो वीहिमृडीकꣳसुहवो न

एधि स्वाहा इदमग्नीवरुणाभ्यां नमः ॐ अयाश्चाग्नेस्यनभिश-स्तिपाश्च सत्यमित्वमयाअसि । अयानो यज्ञं वहास्ययानो धेहि भेषजꣳस्वाहा ॥ इदमग्नये॥ ३ ॥ ॐ येते शतं वरुण ये सहस्र-यज्ञिया पाशावितता महांतः तेभिर्न्नोअद्यसवितोत्तविष्णुर्विश्वे मुंचंतु मरुतः स्वर्काः स्वाहा ॥ इदं सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः। ॐ उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमꣳश्रथाय। अथावयमादित्यव्रते तवानागसो अदितये स्याम स्वाहा ॥ इदं वरुणाय इति द्वादशाहुतयः। अथ प्रोक्षणमंत्रः॥ ॐ आपः शिवाः शिवतमाः शांताः शांततमास्तास्ते कृण्वंतु भेषजं गणानां त्वेति

मंत्रेण गणपतये स्वाहा । अथ नवग्रहहोमः । यथा अर्कः पलाशः खदिरो ह्यपामार्गश्च पिप्पलः । उदुंबरः शमी दूर्वा कुशाश्च समिधः क्रमात् ॥ अर्को नाशयते व्याधिं पलाशी सर्वकामदा । खादिरी चार्थलाभाय ह्यपामार्गा बहुप्रजा ॥ अश्वत्थी च शुभं दद्याद्धनं दद्यादुदुंबरी । शमी शमीयते पापं दूर्वा मंगलवर्द्धनी ॥ कुशाश्च पितृतृप्त्यर्थमित्येताः समिधो नव ॥ अर्कसमिद्भिर्जुहुयात् । ॐ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेन देवो याति भुवनानि पश्यन् स्वाहा । इदं सूर्याय । अथ पलाशसमिद्भिर्जुहुयात् । ॐ इमं देवा असपत्नꣳ सुवध्वं महते

क्षत्राय ज्यैष्ठ्याय महते जानराजायेन्द्रस्येंद्रियाय इमममुष्यै पुत्रममुष्यै पुत्रमस्यै विष एष वोमि राजा सोमोऽस्माकं ब्राह्मणानाᳫं राजा स्वाहा। इदं चंद्राय ॥ २ ॥ खदिरसमिद्भिर्जुहुयात्। ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाᳫंरेताᳫंसि जिन्वति स्वाहा। इदं भौमाय । अपामार्गसमिद्भिर्जुहुयात्। ॐ उद्बुध्यस्वाग्ने प्रतिजागृही त्वामिष्टापूर्तेसᳫंसृजेथामयं च। अस्मिन् सधस्थे अध्युत्तरस्मिन्विश्वेदेवा यजमानस्य सीदतस्वाहा। इदं बुधाय। अश्वत्थसमिद्भिर्जुहुयात्। ॐ बृहस्पते अतियदर्यो अर्हाद्युमद्विभाति क्रतुमज्जनेषु। यदी दयच्छवस ऋतप्रजा तदस्मासु

द्रविणं देहि चित्रं स्वाहा। इदं बृहस्पतये । उदुंबरसमिद्भिर्जुहुयात्। ॐ अन्नात् परिस्रुतो रसं ब्रह्मण व्यपिबत् क्षत्रं पयः सोमं प्रजापति ऋतेन सत्यमिंद्रियं विपानꣳशुक्रमंधस इन्द्रस्येंद्रियमिदं पयोमृतं मधु स्वाहा । इदं शुक्राय ॥ ६ ॥ शमीसमिद्भिर्जुहुयात् ॐ शन्नो देवीरभिष्टय आपो भवंतु पीतये। शंयोरभिस्रवंतु नः स्वाहा । इदं शनैश्चराय । दूर्वासमिद्भिर्जुहुयात् । ॐ कया नश्चित्र आभुव दूती सदा वृधः सखा । कया शचिष्ठया वृता स्वाहा इदं राहवे । कुशसमिद्भिर्जुहुयात् । ॐ केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे समुषद्भिरजायथाः स्वाहा । इदं केतवे। कृतेन होमेन नवग्रहाः प्रीयंताम् ।

अथाधिदेवताहोमः । ॐ त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्द्धनम् । उर्वारुकमिव बंधनान्मृत्योर्मुक्षीयमामृतात् स्वाहा । इदं शिवाय ॥ १ ॥ ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणमुंम इषाण सर्वलोकं म इषाण स्वाहा । इदं लक्ष्म्यै ॥ २ ॥ ॐ यदक्रंदः प्रथमं जायमान उद्यन्समुद्रादुतवापुरीषात् । श्येनस्य पक्षा हिरण्यस्य बाहू उपस्तुत्यम्महिजात ते अर्वन् स्वाहा । इदं स्कंदाय ॥ ३ ॥ ॐ विष्णोरराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा स्वाहा । इदं विष्णवे ॥ ४ ॥ ॐ ब्रह्मजज्ञानं प्रथमं

पुरस्ताद्विसीमतः सुरुचो वेन आवः। सबुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः स्वाहा इदं ब्रह्मणे॥ ५॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवेहवे सुहवꣳ शूरमिंद्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्तिनो मघवा धात्विद्रः स्वाहा। इदमिंद्राय॥ ६॥ ॐ यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे देवस्त्वा सवितामध्वानक्तु पृथिव्याः सꣳस्पृशस्पाहि। अर्चिरसि शोचिरसि तपोसि स्वाहा। इदं यमाय॥ ७॥ ॐ कार्षिरसि समुद्रस्य त्वाक्षित्याऽन्नयामिसमापोअद्भिरग्मतसमोषधीभिरोषधीं स्वाहा। इदं कालाय॥ ८॥ ॐ चित्रावसो स्वस्ति ते पारमशीय स्वाहा। इदं

चित्रगुप्ताय । कृतेन होमेन अधिदेवताः प्रीयंताम् । अथ प्रत्याधिदेवताहोमः । ॐ अग्निंदूतं पुरो दधे हव्यवाहमुपब्रुवो देवाꣳ आसायादिह स्वाहा । इदमग्नये ॥ १ ॥ ॐ अप्स्वग्ने सधिसौषधीरनुरुध्यसे गर्भे संजायसे पुनः स्वाहा । इदं अद्भ्यः ॥ २ ॥ ॐ स्योना पृथिवीनो भवानृक्षरा निवेशनी । यच्छानः शर्म्मसप्रथाः स्वाहा । इदं धरण्यै० ॥ ३ ॥ ॐ विष्णोरराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा स्वाहा । इदं विष्णवे ॥ ४ ॥ ॐ ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः सबुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः स्वाहा ।

इदं ब्रह्मणे ॥ ५ ॥ ॐ त्रातारमिंद्रमवितारमिंद्रꣳहवेहवे सुहवꣳशूर-मिंद्रम् । ह्वयामि शक्रं पुरहूतमिंद्रꣳस्वस्तिनो मघवा धात्विंद्रः स्वाहा इदमिन्द्राय । ॐ आदित्यैरास्नासींद्राण्याऽउष्णीषपूषासि घर्म्मायदीष्व स्वाहा । इदमिंद्राण्यै ॥ ६ ॥ ॐ नमोऽस्तु सर्पेभ्यो येकेच पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः स्वाहा । इदं सर्पेभ्यः । ॐ प्रजापते नत्वदेतान्यन्यो विश्वा रूपाणि परिताबभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयममुष्य पितासा-वस्य पिता वयꣳ स्याम पतयो रयीणाम् इदं प्रजापतये ॥ ८ ॥ अनेन होमेन प्रत्यधिदेवताः प्रीयन्ताम् । अथ पञ्च लोकपालहोमः

ॐ गणानां त्वा गणपतिꣳ हवामहे प्रियाणां त्वा प्रियपतिꣳ हवामहे निधीनां त्वा निधिपतिꣳ हवामहे वसो मम । आहमजानि गर्भधमा त्वमजासि गर्भधं स्वाहा । इदं गणपतये नमः । ॐ अम्बेऽअम्बिकेम्बालिके न मानयति कश्चन । ससस्त्यः श्वकः सुभद्रिकां कांपीलवासिनीं स्वाहा । इदमम्बिकायै । ॐ वातो वामनो वा गन्धर्वा सप्तविंꣳशति स्ते अग्रेश्वमयुंजंस्तेऽस्मिन् जवमादधुः स्वाहा । इदं वायवे । ॐ घृत घृतपावानः पिबतवसां वसापावानः पिबतां तक्षस्य हविरसि स्वाहा । दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहा । इदमाकाशाय ॥ ४ ॥ ॐ यवां कषामधुमत्य

श्विना सूनृतावती तयायज्ञम्मिमिक्षतं स्वाहा ॥ ५ ॥ इदमश्विभ्याम् । अनेन होमेन पंचलोकपालाः प्रीयंताम् । अथ दशदिक्पालहोमः । ॐ त्रातारमिंद्र मवितारमिंद्रꣳ हवेहवे सुहवꣳ शूरमिंद्रं । ह्वयामि शक्रं पुरुहूतमिंद्रꣳ स्वस्तिनो मघवा धात्विंद्रः स्वाहा । इदमिंद्राय ॥ १ ॥ ॐ अग्निं दूतं पुरो दधे हव्यवाहमुपब्रुवे देवाꣳआसादया-दिह स्वाहा । इदमग्नये ॥ २ ॥ ॐ यमाय त्वा मखाय त्वा सूर्य्यस्य त्वा तपसे देवस्त्वा सविता मध्वानक्तु पृथिव्याः संꣳस्पृशस्पाहि अर्चिरसि शोचिरसि तपोसि स्वाहा । इदं यमाय ॥ ३ ॥ ॐ असुन्वंतमयजमानमिच्छस्तेनस्येत्यामन्विहि तस्करस्य अन्य-

मस्मदिच्छासातइत्यानमो । देविनिर्ऋते तुभ्यमस्तु स्वाहा । इदं निर्ऋतये ॥ ४ ॥ ॐवरुणस्योतंभनमसि वरुणस्य स्कंभसर्जनीस्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद स्वाहा । इदं वरुणाय ॥ ५ ॥ ॐ वायो येते सहस्रिणो रथाशस्तेभि रागहिनियुत्वान् सोमपीतये स्वाहा । इदं वायवे ॥ ६ ॥ ॐ कुविदंगयवमंतोयवं चिद्यथादात्यनपूर्वं विपूय इहेहैषा कृणुहि भोजनानि ये बर्हिषो नमः उक्तियजाति स्वाहा । इदं कुबेराय ॥ ७ ॥ ॐ तमीशानं जगतस्तस्थुषस्पतिं धियं जन्वमवसे हूमहे वयं पषानो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः

स्वस्तये स्वाहा। इदमीशानाय ॥ ८ ॥ ॐ अस्मे रुद्रा मेहना-पर्वतासो वृत्रहत्येभरहूतौ सजोषाः। यश्शꣳसते स्तुवते धायि वज्र इन्द्रज्येष्ठा अस्माꣳअवं देवाः स्वाहा। इदं ब्रह्मणे॥ ९ ॥ ॐ स्योना पृथिवीनो भवानृक्षरा निवेशनी। यच्छा नः शर्म्मसप्रथाः स्वाहा। इदं अनंताय ॥ १० ॥ इन्द्रादिदशदिक्पालप्रीतये। यत् कृतं तत् सुकृतमस्तु। अथ मातॄणां होमः। ॐ गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातारः। हृष्टिः पुष्टिस्तथातुष्टिस्तथात्मकुलदेवता। षोडश-मातृभ्यः स्वाहा। ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा।

वाराही च तथैंद्राणी चामुंडा सप्तमातरः सप्तमातृभ्यः स्वाहा। कलशस्थदेवेभ्यः स्वाहा। अथ प्रधानदेवताहोमः । ॐ अगस्त्याय स्वाहा । अश्विन्यादिअष्टाविंशतिनक्षत्रेभ्यः स्वाहा। मेषादिद्वादशराशिभ्यः स्वाहा । ऋग्वेदादिचतुर्वेदेभ्यः स्वाहा । कश्यपादिसप्तऋषिभ्यः स्वाहा । अष्टवसुभ्यः स्वाहा । एकादशरुद्रेभ्यः स्वाहा। द्वादशादित्येभ्यः० । एकोनपंचाशन्मरुद्भ्यः स्वाहा । त्रयोदशविश्वेभ्योदेवेभ्यः स्वाहा । चतुःषष्टियोगिनीभ्यः स्वाहा। क्षारादिसप्तसमुद्रेभ्यः स्वाहा । अष्टनागकुलेभ्यः स्वाहा। पितृभ्यः स्वाहा। सिद्धेभ्यः स्वाहा। प्रधानदेवताप्रीतये यत्कृतं तत् सुकृतं भवतु।

व्याहृतिहोमः । ॐ भूः स्वाहा इदमग्नये । ॐ भुवः स्वाहा इदं वायवे । ॐ स्वः स्वाहा इदं सूर्य्याय । इति व्याहृतिहोमः । अथ सर्वतोभद्रहोमः गणपतये स्वाहा । दुर्गायै स्वाहा । ब्रह्मणे० । सोमाय० । ईशानाय० । इन्द्राय० । अग्नये० । यमाय० । निर्ऋतये० । वरुणाय० । वायवे० । ध्रुवाय० । अध्वराय० । अद्भ्यः० । अनिलाय० । नलाय० । प्रत्यूषाय० । प्रभासाय० । अजाय० । एकपदे० । अहिर्बुध्न्याय० । विरूपाक्षाय० । ऐरावताय० । रुद्राय० । बहुरूपाय० । त्र्यंबकाय० । सुरेश्वराय० । सवित्रे० । जयंताय० । पिनाकिने० । रुद्राय० । धात्रे० । मित्राय० । यमाय० ।

रुद्राय० । वरुणाय० । सूर्य्याय० । भगाय० । विवस्वते० । पूष्णे० । सवित्रे० । त्वष्ट्रे० । विष्णवे० । अश्विभ्यां० । क्रतवे० । दक्षाय० । वसवे० । सत्याय० । कालाय० । कामाय० । अध्वराय० । रोचनाय० । पुरूरवसे० । आर्द्रवाय० । सोमाय० । कश्यपाय० । सोमपाय० । अग्निष्वात्ताय० । बर्हिषदे० । सुकालाय० । एकशृंगाय० । शूद्राय० । अत्रये० । भरद्वाजाय० । गौतमाय० । जमदग्नये० । वसिष्ठाय० । अनंताय० । वासुकये० । शेषाय० । तक्षकाय० । कर्कोटकाय० । पद्माय० । महापद्माय० । शंखपालाय० । कंबलाय० । पिशाचेभ्यः० । गुह्यकेभ्यः० । सिद्धेभ्यः० ।

भूतेभ्यः०। सर्पेभ्यः०। विश्वावसवे०। गंधर्वाय०। हाहै०। हूहै०। घृताच्यै०। मेनकायै०। रंभायै०। उर्वश्यै०। तिलोत्तमायै०। सुकेश्यै०। मंजुघोषायै०। रुद्रेभ्यः०। स्कंदाय०। नदीश्वराय०। शूलाय०। महादेवाय०। रुद्राय०। श्रियै०। विष्णवे०। मरुद्-गणाय०। पितृभ्यः०। रोगाय०। मृत्यवे०। वसुभ्यः०। विघ्नराजा-य०। अद्भ्यः०। समीराय०। मारुताय०। मरुते०। जगत्प्रा-णाय०। समीरणाय०। मातरिश्वने०। मेदिन्यै०। गंगायै०। सरस्वत्यै०। शरय्वै०। कौशिक्यै०। वेत्रवत्यै०। गोदायै०। ताप्यै०। रेवायै०। पयोदायै०। कृष्णायै०। भीमरथ्यै०। तुंगभद्रायै०।

क्षुद्रनदीभ्यः० । लवणसमुद्राय० । इक्षुसमुद्राय० । सुरासमुद्राय० । सर्पिःसमुद्राय० । दधिसमुद्राय० । जीवनसमुद्राय० । आदित्याय० । सोमाय० । भौमाय० । बुधाय० । बृहस्पतये० । शुक्राय० । शनैश्चराय० । राहवे० । केतवे० । ब्राह्म्यै० । माहेश्वर्यै० । कौमार्यै० । वैष्णव्यै० । वाराह्यै० । इन्द्राण्यै० । चामुंडायै० । वज्रायै० । शक्तये० । दंडाय० । खड्गाय० । पाशाय० । अंकुशाय० । गदायै० । त्रिशूलाय० । पद्माय० । चक्राय० । श्रीमहाविष्णवे स्वा०

अथ वास्तुदेवताहोमः ॥ शिखिने स्वाहा० । पर्जन्याय० । जयंताय० । कुलिशायुधाय० । सूर्याय० । सत्याय० ।

मृशाय० । आकाशाय० । पूष्णे० । वितथाय० । गृहक्षताय० । यमाय० । गंधर्वाय० । भृङ्गराजाय० । मृगाय० । पितृभ्यो० । दौवारिकाय० । सुग्रीवाय० । पुष्पदंताय० । वरुणाय० । असुराय० । शेषाय० । पापाय० । रोगाय० । अहये० । मुख्याय० । भल्लाटाय० । सोमाय० । सर्पाय० आदितये० । दितये० । अद्भ्यो० । आपवत्साय० । अर्य्यमणे० । सावित्राय० । सवित्रे० । विवस्वते० । विबुधाय० । जयंताय० । मित्राय० । राजयक्ष्मणे० । रुद्राय० । पृथिवीधराय० । ब्रह्मणे स्वा० । अनेन होमेन वास्तुदेवताः प्रीयंतां ॥ अग्नये स्विष्टकृते स्वाहा इदं स्विष्टकृते नमः ।

इति स्विष्टकृद्धोमः । यत् कृतं जपं तत् दशांशमहं यजे संस्रवप्राशनम् । अथ दशदिक्पालबलिः । ॐ त्रातारमिंद्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳशूरमिंद्रम् । ह्वयामि शक्रं पुरुहूतमिंद्रꣳ स्वस्तिनो मघवा धात्विंद्रः । इन्द्राय सांगाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि भो इन्द्र दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुंबस्य आयुष्कर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता वरदो भव । पूर्वदिशि बलिं समर्पयामि । ॐ तन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अवयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वेदेवाꣳसि प्रमुमुग्ध्यस्मत् ॥२॥ अग्नये सांगाय सपरिवा-

राय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि भो अग्ने दिशं रक्ष बलिं भक्ष मम यजमानस्य सकुटुंबस्य सपरिवारस्य आयुष्कर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता वरदो भव । दक्षिणे ॐ यमाय त्वा मखाय त्वा सूर्य्यस्य त्वा तपसे देवस्त्वा सविता मध्वानक्तु पृथिव्याः सꣳस्पृशस्पाहि । अर्चिरसि शोचिरसि तपोसि ॥ ३ ॥ यमाय सांगाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि भो यम दिशं रक्ष बलिं भक्ष मम यजमानस्य सकुटुंबस्य आयुष्कर्ता क्षेमकर्ता पुष्टिकर्ता शांतिकर्ता वरदो भव ॥ ३ ॥ नैर्ऋत्यां । ॐ असुन्वंतमयजमानमिच्छस्तेनस्येत्यामन्विहि

तस्करस्य। अन्यमस्मदिच्छसातइत्या नमो देवि निर्ऋते तुभ्य-मस्तु। निर्ऋतये सांगाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि भो निर्ऋते दिशं रक्ष बलिं भक्ष मम यजमानस्य सकुटुंबस्य आयुष्कर्ता क्षेमकर्ता शांतिकर्ता पुष्टि-कर्ता वरदो भव॥ ४॥ पश्चिमे। ॐ तत्वायामि ब्रह्मणा वंदमानस्तदा-शास्ते यजमानो हविर्भिः। अहेडमानो वरुणे हबोध्युरुशंसमान आयुः प्रमोषीः॥ वरुणाय सांगाय सपरिवाराय सायुधाय सश-क्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि भो वरुण दिशं रक्ष बलिं भक्ष मम यजमानस्य सकुटुंबस्य आयुष्कर्ता क्षेमकर्ता

शांतिकर्ता पुष्टिकर्ता वरदो भव ॥ ५ ॥ वायव्ये ॐ आनोनियुद्भिः शतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहियज्ञम् । वायो अस्मिन् सवने मादयस्व यूयं पातस्वस्तिभिः सदा नः ॥ वायवे सांगाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि भो वायो दिशं रक्ष बलिं भक्ष मम यजमानस्य सकुटुम्बस्य सपरिवारस्य आयुष्कर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता वरदो भव ॥ ६ ॥ उत्तरे ॐ वय ꣳ सोमव्रतेतवमनस्तनूषुबिभ्रतः प्रजावंतःसचेमहि । कुबेराय सांगाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि भो कुबेर दिशं रक्ष बलिं भक्ष मम यजमा-

नस्य सकुटुम्बस्य सपरिवारस्य आयुष्कर्ता क्षेमकर्ता पुष्टिकर्ता शांतिकर्ता वरदो भव ॥ ७ ॥ ऐशान्यां ॐ तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे । वयं पूषानो यथा वेदसामसद् धेरक्षितापायुरदब्धः स्वस्तये । ईशानाय सांगाय सपरिवाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिंसमर्पयामि भो ईशान दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुम्बस्य आयुष्कर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता वरदो भव ॥ ८ ॥ ईशानपूर्वयोर्मध्ये । ॐ अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः । यःश ँ स ते स्तुवते धायि वज्र इंद्रज्येष्ठा अस्मा ँ अवंतु देवाः । ब्रह्मणे सांगाय सपरि-

वाराय सायुधाय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि भो ब्रह्मन् दिशं रक्ष बलिं भक्ष अस्य यजमानस्य सकुटुम्बस्य आयुष्कर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता वरदो भव ॥ ९ ॥
ॐ स्योनापृथिवीनोभवानृक्षरानिवेशनीयच्छानः शर्म्मसप्रथाः । अनंताय सांगाय सपरिवाराय सशक्तिकाय एतं सदीपं दधिमाषभक्तबलिं समर्पयामि मम यजमानस्य सकुटुंबस्य सपरिवारस्य आयुष्कर्ता क्षेमकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव । अथ नवग्रहबलिः ।
ॐ ग्रहाऽउर्जाहुतयोव्यंतविप्राय मतिं तेषां विशिप्रियाणां वाहमिमूर्ज ँ समग्रभं । ग्रहेभ्यः सांगेभ्यः सपरिवारेभ्यः सायुधेभ्यः सश-

त्तिकेभ्यः एतं सदीपं दधिमाषभक्तबलिं समर्पयामि भो ग्रहाः दिशं रक्षत बलिं भक्षत मम यजमानस्य सकुटुंबस्य आयुष्कर्तारः क्षेमकर्तारः शांतिकर्तारः पुष्टिकर्तारः वरदा भवत । अथ क्षेत्रपालबलिः। दधिमाषसिंदूरकज्जलदीपद्रव्यसहितान्पात्रे निधाय ॐ नहिस्पशमविदन्नन्यमस्माद्वैषानरात्पुर एतारमग्नेः एमे नमः वृधन्नमृतामर्त्यं वैश्वानरं क्षेत्रजित्याय देवाः ॥ ॐ क्षेत्रपालाय शाकिनीडाकिनीभूतप्रेतपिशाचवैतालसहिताय इमं बलिं समर्पयामि भो क्षेत्रपाल दिशं रक्ष बलिं भक्ष मम यजमानस्य सकुटुंबस्य आयुष्कर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता वरदो भव ॥ अथ ब्रह्मणे

पूर्णपात्रदानं ततो ब्रह्मग्रंथिविमोकः । कृतस्य होमकर्मणः सांगतासिद्ध्यर्थमिदं पूर्णपात्रं सदक्षिणं ब्रह्मणे तुभ्यमहं संप्रददे पवित्राभ्यां शिरं समृज्य परिक्रमणं कृत्वा अग्नौ प्रक्षिपेत् । ॐ दुर्मिन्नायस्तस्मै संतु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः। इति मंत्रेणैशान्यां प्रणीतां न्युब्जीकुर्यात् । आस्तरणक्रमेण उत्थाप्य अग्नौ प्रक्षिपेत् । अथ बर्हिहोमः । ॐ देवा गातु विदो गातुं वित्वागातुमितमनस्पत इमं देवयज्ञ ᳪ स्वाहा वातेधा स्वाहा । ततः छायापात्रदानम् । कृतस्य होमकर्म्मणः सांगतासिद्ध्यर्थं इदं पूर्णछायापात्रं साज्यं सदक्षिणं यथानामगोत्राय ब्राह्मणाय

तुभ्यमहं संप्रददे । अथ पूर्णाहुतिसंकल्पः । अद्येत्याद्यमुकमासेऽमुकपक्षेऽमुकतिथावमुकवासरे मम मनोभिलषितधर्मार्थकामादियथेप्सितायुरारोग्यैश्वर्यपुत्रपशुसखिसुहृत्संबंधिबंध्वादिप्राप्तये ब्राह्मणमुखद्वारा सत्कारिते नूतनगृहप्रवेशकर्मयज्ञकर्मणि इष्टदेवताप्रीतये च स्वैर्मंत्रैर्यवतिलतंडुलाज्याहुतिभिः परिपूर्णतासिद्ध्ये पूर्णाहुतिहोममहं करिष्ये तद्यथा० शक्रादयः सुरगणा० इत्यादिभिः श्लोकैः वा मंत्रैः। ॐ पूर्णादर्विपरापतसुपर्णापुनरापतवस्नेवविक्रीणावहाइषमूर्ज २ शतक्रतो स्वाहा । इति पूर्णाहुतिस्रुवेण भस्मानीय ॐ त्र्यायुषं जमदग्नेः इति ललाटे । कश्यपस्य त्र्यायुषं इति

ग्रीवायां । यद्देवेषुत्र्यायुषमितिदक्षिणबाहुमूले । तन्नो अस्तु त्र्यायुषमिति हृदि । इति त्र्यायुषकरणम् । अथ नीराजनम् । जय अम्बे गौरी मैया जय मंगलमूर्ति मैया जय आनंदकरणी । तुमको निशिदिन ध्यावत हरि ब्रह्मा शिवजी ॥ जय देव जय देव ॥ टेक ॥ मांग सिंदूर विराजत टीको मृगमदको । उज्ज्वलसे दो नैना चंद्रवदन नीको । जय० ॥ १ ॥ कनकसमान कलेवर रक्तांबर राजे । देवी र० । रक्तपुष्पगलमाला कंठनपर साजे । जय० ॥ २ ॥ केहरिवाहन राजत खड्गखप्र धारी ॥ सुर नर मुनिजन सेवत तिनके दुख हारी । जय देव० ॥ ३ ॥ कानन कुंडल शोभित नासाग्रे

गजमोती । ना० । कोटिक चन्द्र दिवाकर राजत सम जोती । जय देव० ॥ ४ ॥ शुंभ निशुंभ बिडारे महिषासुरघाती म० । धूम्रविलोचन नैना निशिदिन मदमाती ॥ जय देव० ॥ ५ ॥ चौसठि योगिनि मंगल गावत नृत्य करत भैरु ॥ बाजत ताल मृदंगा अरु बाजे डमरु ॥ जय देव० ॥ ६ ॥ भुजा चार अतिशोभित खड्ग खप्परधारी । मन-वांछित फल पावत सेवत नर नारी ॥ जय देव० ॥ ७ ॥ कंचन थाल विराजत अगर कपूर वाती । श्रीमालाकेतुमराजतकोटिरतन-जोती । जय० ॥८॥ या अंबेकी आरती जो कोइ नर गावे । जो कोई नर गावे । भणत शिवानंदस्वामी सुखसंपतिपावे । जय देव० ॥ ९ ॥

अथ पुष्पांजलिः। ॐ यज्ञेन यज्ञमयजंत देवास्तानि धर्म्माणि प्रथमान्यासन्। तेह नाकं महिमानः सचंत यत्र पूर्वे साध्याः संति देवाः राजाधिराजाय प्रसह्यसाहिने मनो वयं वै श्रवणाय कुर्महे स मे कामान् कामकामाय मह्यं कामेश्वरो वै श्रवणो ददातु कुबेराय वैश्रवणाय महाराजाय नमः ॐ स्वस्ति साम्राज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समंत-पर्यायीस्यात् सार्वभौमः सार्वायुष आंतादापरार्धात् पृथिव्यै समु-द्रपर्यंताया एकराडिति तदप्येष श्लोकोभिगीतो मरुतः परिवे-ष्टारो मरुत्तस्यावसन् गृहे आविक्षितस्य काम प्रेर्विश्वेदेवाः सभा-

सदः ॐ विश्वतश्चक्षुरुत विश्वतो मुखो बाहुरुतविश्व तस्पात्। संबाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयंतु देव एकः ।सुगंधवल्लीशतपत्रजातिसुगंधचंपाबकुलोद्भवानि गृहाण पुष्पाणि मयार्पितानि दुर्गे सदा ह्यंजलिकल्पितानि ॥ दुर्गे देवि नमस्तुभ्यं सकलासुरनाशिनि । पुष्पाञ्जलिं मया दत्तं गृहाण त्वं सुरेश्वरि। अथ परिक्रमा ।यानि कानि च पापानि जन्मांतरकृतानि च । तानि तानि विनश्यंति प्रदक्षिणा पदे पदे। ततो देव्यपराधक्षमा। अथ कुमारिकासंकल्पः । ॐ अद्य कृतैतन्नूतनगृहप्रवेशयज्ञकर्मणि सांगतासिद्ध्यर्थं नवकुमारिका अहं भोजयिष्ये यथा प्रथमं शैलपुत्री

च द्वितीयं ब्रह्मचारिणी । तृतीयं चंद्रघंटेति कूष्माण्डेति चतुर्थकम् । पंचमं स्कंदमातेति षष्ठं कात्यायनीतिच । सप्तमं कालरात्रीति महागौरीति चाष्टमम् । नवमं सिद्धिदा प्रोक्ता नवदुर्गाः प्रकीर्तिताः । उक्तान्येतानि नामानि ब्रह्मणैव महात्मना ॥ अथ बटुकपूजनम् । ॐ करकलितकपालः कुंडली दंडपाणिस्तरुणतिमिरनीलव्यालयज्ञोपवीती । क्रतुसमयसपर्याविघ्नविच्छेदहेतुर्जयति बटुकनाथः सिद्धिदः साधकानाम् ॥ अथ दक्षिणासंकल्पः । ॐ अद्यकृतैतन्नूतनगृहप्रवेशकर्म्मणि सांगतासिद्ध्यर्थं ऋक्यजुःमासाथर्वाध्यायिभ्यो हिरण्यमयाग्निदैवतं रजतं तथानामगोत्रेभ्यः ब्राह्म-

णेभ्यस्तुभ्यमहं संप्रददे। अथ गोदानसंकल्पः ॥ ॐ अद्यकृतैतन्नूतनगृहप्रवेशकर्म्मणि सांगतासिद्ध्यर्थं इमां गां सवत्सां समलंकृतां कामदुघां यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृजे। अथ ब्राह्मणभोजनसंकल्पः ॥ ॐ अद्यकृतैतन्नूतनगृहप्रवेशयज्ञकर्म्मणि सांगतासिद्ध्यर्थं पक्वान्नेन सिद्धान्नेन ब्राह्मणान् अहं भोजयिष्ये। अथ भूयसीसंकल्पः ॥ ॐ अद्यकृतैतन्नूतनगृहप्रवेशयज्ञकर्मणि सांगतासिद्ध्यर्थं अन्येभ्यः विप्रेभ्यः भूयसीदक्षिणामहं दास्ये। अथाग्निविसर्जनम्। गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर। यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन। आगतास्तु

यथान्यायं पूजितास्तु यथाविधि । कृत्वा कृपां मयि देवा यत्रासं तत्र गच्छत ॥ यजमानहितार्थाय पुनरागमनाय च । शत्रूणां बुद्धिनाशाय मित्राणामुदयाय च ॥ यथाशस्त्रप्रहाराणां कवचं धारणं भवेत् । तद्वद्देवाभिघातानां शांतिर्भवति वारणम् ॥ अथ मंडपकलशाम्बुपात् यजमानमभिषिंचेत् । ॐ आपोहिष्ठा मयो भुवस्तान ऊर्जे दधातन । ॐ महेरणाय चक्षसे । दक्षिणां दत्वा यजमानब्राह्मणकंकणविमोकः यथा ईशाने कलशं स्थापितं तन्मंडपस्य गणेशादिविसर्जनम् ॥ यांतु देवगणाः सर्वे पूजामादाय मामकीम् । इष्टकामहितार्थाय पुनरागमनाय च ॥ ॐ अग्निमीळे पुरोहितमित्या-

दिमंत्रेण गणेशादीन्देवानुत्थापयेत् ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् । अथाभिषेकः । ॐ सुरास्त्वामभिषिंचंतु ब्रह्मविष्णुमहेश्वराः । वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥ प्रद्युम्नश्चानुरुद्धश्च भवंतु विजयाय ते। आखंडलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहिताः शेषा दिक्पालाः पांतु वः सदा ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा वपुः शांतिस्तुष्टिः कांतिश्च मातरः ॥ एतास्त्वामभिषिंचंतु देवपत्न्यः समाहिताः। आदित्यश्चंद्रमा भौमो बुधजीवसिता-

र्कजाः ॥ ग्रहास्त्वामभिषिंचंतु राहुः केतुश्च तर्पिताः । देवदानवगंधर्वा यक्षराक्षसपन्नगाः ॥ ऋषयो मानवो गावो देवमातर एव च । देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालश्चावयवा हि ये ॥ सरितः सागराः शैलास्तीर्थानि जलदा नदाः । एते त्वामभिषिंचंतु सर्वकामार्थसिद्धये ॥ इत्यभिषिंच्य यजमानं प्रति आशिषं । ऋग्वेदस्तु यजुर्वेदः सामवेदो ह्यथर्वणः । ब्रह्मवाक्यैश्च ते नित्यं हन्यंतां तव शत्रवः ॥ अपुत्राः पुत्रिणः संतु पुत्रिणः संतु पौत्रिणः । अधनाः सधनाः संतु संतु सर्वार्थसाधकाः ॥ विप्रह-

स्ताञ्च गृहीयाद्यज्ञपुष्पफलाक्षतान् । चत्वारस्तव वर्धंतामायुः कीर्तिर्यशो बलं । ततो यजमानं प्रति तिलकं देयात् अनेन मंत्रेण ॥ ॐ स्वस्तिन इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः । स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥ आचार्यः तद्दशांशतर्पण तद्दशांशमार्जनं कारयेत् । अथ वास्तु पृथिव्यां गर्तयेत् ॥ ततः कृणुष्वपाजः पुनंतु मेति मंत्रद्वयाभ्यां त्रिसूत्र्या मंडपं संवेष्ट्य परितो जलदुग्धयोः पृथगवच्छिन्ने धारे दद्यात् तद्यथा । कृणुष्वपाजः प्प्रसितिन्नपृथिवींय्याहि राजेवामवाँ२इभेन तृष्वीमनुप्प्रासितिन्द्रूणानोस्तासिध्यरक्षसस्तपिष्ठैः । पुनंतु देवजनाः

पुनंतु मनसा धियः पुनंतु विश्वाभूतानि जातवेदः पुनीहि मा ॥ तद-
नंतरं मंडपे पीठे वा पूजितां हैमीं वास्तुप्रतिमां दधिदूर्वासप्तधान्य-
शैवालगंधाक्षतयुतेऽपक्वमृद्भांडे संस्थाप्य तं भांडं पिधाय चतुःषष्टि-
धामाजितनवधा वा भाजिते प्रासादाग्नेयकोणपदादुत्तरे आकाश-
पदे जानुमात्रं गर्तं कृत्वा जलेनापूर्य्य गंधपुष्पाणि गर्ते प्रक्षिप्य
निरुक्तमृन्मयभांडं तत्र निधाय गर्तस्यैव मृदा पूरयेत् मृदाधिक्ये
शुभम् ॥ ॥ इति नूतनगृहप्रवेशहवनपद्धतिः समाप्ता ॥ ॥ ॥

---

इदं पुस्तकं कल्याणनगर्यां श्रीकृष्णदासात्मज-गंगाविष्णोः " लक्ष्मीवेंकटेश्वर " मुद्रणालये
रामचंद्र राघो इत्यनेन स्वाम्यर्थं मुद्रितं प्रकाशितं च । संवत् १९६९, शके १८३४.

श्रीगोपालमहीसुरेण विदुषा प्राचयान्निबंधान्मुहुर्वीक्ष्याकारि सुशीत-लस्य कृपया मुद्रापणे संमता । सेयं श्रीयुतहोतचंद्रविदुषा लिप्ताऽक्ष-रैस्सुंदरैर्ज्जीयाच्छ्रीलगणेशविप्रकविना संशोधिता मोदत ॥ १ ॥ महीभृत्तर्काकौषधिपतिमिते विक्रमभवे शके रामोग्राक्ष्यऽष्टविधुमि-लितेऽब्दे सितदले ॥ इषे भौमे तिथ्याम्विजययुत याम्यामधिगता ॥ समाप्तिं सौम्येयं नवभवनवेशस्य सरणिः ॥ २ ॥ यदशुद्धमसंबद्धम-ज्ञानेन कृतं मया । विद्वद्भिः क्षम्यतां पूर्वं कृपादृष्टिं विधाय वै ॥ ३ ॥

पुस्तक मिलनेका ठिकाना—गंगाविष्णु श्रीकृष्णदास
"लक्ष्मीवेंकटेश्वर" छापाखाना कल्याण—मुंबई.
२८।८।१२

श्रीः ।

इयं

# कलशस्थापनपद्धतिः ।

विद्वच्छिरोमणिना श्रीमता पण्डितगोपालशर्म्मणा संस्कृतपाठशालामुख्याध्यापकेन
सिन्धुसक्करनिवासिना ग्रन्थेभ्यः समाहृत्य विरचिता ।

तदनुजपं. होतचन्द्रशर्म्मणा संशोधिता ।

सेयं

श्रीकृष्णदासात्मज-गंगाविष्णोः स्वकीये " लक्ष्मीवेंकटेश्वर " मुद्रणयन्त्रालये

रामचंद्र राघो इत्यनेन स्वाम्यर्थं

मुद्रिता प्रकाशिता च ।

कल्याण-मुंबई.

ॐ श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीभतुण्डं नमस्कृत्य शुद्धां देवीं सरस्वतीम् । द्विजानां च हितार्थाय कुर्वे कलशपद्धतिम् ॥ १ ॥ अथ कलशस्थापनपद्धतिः प्रारभ्यते ॥ तत्रादौ यजमानः सपत्नीकः शुभदिने शुभमुहूर्ते कुशासने यजमानः पत्नीदक्षिणपार्श्वे प्राङ्मुखानुपविशयेयुः । तत्र प्रथमं अंचलकोणे यजमानदुकूलांचलकोणे रक्ताक्षतहरिद्रदूर्वापूगीफलानि बद्ध्वा इदं मंत्रं पठेत् ॥ यं ब्रह्म वेदांतविदो वदंति परं प्रधानं पुरुषं तथान्ये । विश्वोऽङ्ग ते कारणमीश्वरं वा तस्मै नमो विघ्नविनाशनाय ॥ सपत्नीकयजमानस्यानेन मंत्रेण तिलकं कुर्यात् ॥ ॐ स्वस्तिन न इन्द्रोवृद्धश्रवाः स्वस्तिनः पूषा विश्ववे-

दाः स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥ अनेन मंत्रेण । पत्नीतिलकं कुर्यात् । आयुर्बलं विपुलमस्तु सुखित्वमस्तु सौभाग्यमस्तु विशदास्तव कीर्तिरस्तु । श्रेयोस्तु धर्ममतिरस्तु रिपुक्षयोऽस्तु संतानवृद्धिरभिवांछितसिद्धिरस्तु ॥ ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा । यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यंतरश्शुचिः पुण्डरीकाक्षः पुनातु॥ त्रिराचम्य॥ प्राणायामाः तत्रादौ गणेशं गुरुं स्मृत्वा ॥ प्रतिज्ञासंकल्पं कुर्यात् । ॐ स्वस्ति श्रीमत्सच्चिदानंदब्रह्मणोऽनिर्वाच्यमायाशक्तिविजृंभिताविद्यायोगात् कालकर्म्मस्वभावाविर्भूतमहत्तत्त्वोत्पादिताहंकारततीयोद्भूतशब्दादिपंचतन्मात्रे-

द्रियदेवतासमुदायनिर्मिते चतुर्दशभुवनात्मकेऽण्डकटाहे लीलया तन्मध्यवर्तिभगवतः श्रीनारायणस्य नाभिकमलोद्भूतस्य सकललोकपितामहस्य ब्रह्मणः सृष्टिं प्रकुर्वतस्तदुद्धरणाय प्रजापतिप्रार्थितस्य सकलजगदुत्पत्तिस्थितिलयकारणस्य रक्षाशिक्षाविचक्षणस्य प्रणतपारिजातकस्य अच्युतानंतवीर्यस्य भगवतो महापुरुषस्य श्रीमदादिनारायणस्याचिंत्यापरिमितशक्त्या ध्येयमानस्य महाजलौघमध्ये परिभ्रम्यमाणानामनेककोटिब्रह्मांडानां एकतममहदहंकारपृथिव्यप्तेजोवाय्वाकाशाद्यावरणैरावृतेऽस्मिन् ब्रह्मांडखंडयोर्मध्ये आधारशक्तिश्रीमद्वराहदंष्ट्राग्रविराजिते कूर्मानंतवासुकितक्षककुलि-

कर्कोटकपद्ममहापद्मशंखमहानागैः संध्रियमाणे ऐरावतपुण्डरीक-
वामनकुमुदांजनपुष्पदंतसार्वभौमसुप्रतीकाष्टदिग्गजोपरि प्रतिष्ठिते
अतलवितलसुतलतलातलरसातलमहातलपाताललोकस्योपरिभा
गेभूर्लोकभुवर्लोकस्वर्लोकमहर्लोकजनलोकतपलोकसत्यलोकेति-
सप्तलोकस्याधोभागे चक्रवालशैलमहावलयनगमध्यवर्तिनो महा-
कालमहाफणिराजशेषस्य सहस्रफणानां मणिमंडलमंडिते दिग्दंति-
शुण्डो तस्मिन्नमरावतीभोगवतीसिद्धवतीगांधर्ववत्यलकावत्यादिपु-
ण्यपुरीप्रतिष्ठिते इंद्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानेतिदिक्पाल-
प्रतिष्ठिते लोकालोकाचलवलयिते लवणेक्षुसुरासर्पिर्दधिक्षीरोदक-

सप्तार्णवपरिवृते जम्बुप्लक्षशाल्मलिककुशक्रौंचशाकपुष्कराख्यसप्त-
द्वीपयुते इंद्रकांस्यताम्रगभस्तिनागसौम्यगंधर्वचारणभारतेतिनवखं-
डमंडिते सुवर्णगिरिकर्णकोपेतमहासरोरुहाकारपंचाशत्कोटियोजन-
विस्तीर्णभूमंडले अयोध्यामथुरामायाकाशीकांचीअवंतिकाद्वाराव-
तीतिसप्तपुरीप्रतिष्ठिते शालग्रामशंभलनंदीग्रामेतिग्रामत्रयविराजिते
चंपकारण्यबदरिकारण्यदंडकारण्यार्बुदारण्यधर्मारण्यपद्मारण्यगुह्या-
रण्यजंबुकारण्यनैमिषारण्येति नवारण्ययुक्ते सुमेरुनिषदरजतकूटशु-
भ्रकूटारकूटहिमाचलानां हरिवर्षकिंपुरुषवर्षयोश्च दक्षिणदिग्विराज-
माननवसहस्रयोजनविस्तीर्णे भरतखंडे मलयाचलविन्ध्याचलाद्य-

नेकमहापर्वतमंडिते स्वर्णप्रस्थचंडप्रस्थसूक्तिकावर्तकरमणकमहा-
रमणकपांचजन्यसिंहकलंकेतिनवखंडोपद्वीपमंडिते दक्षिणावर्तक-
रेणुकाद्वयसूकरकाशिकांचीकालिकावटेश्वरकालञ्जरमहाकालेतिन-
वोखरयुते सोमनाथनागेशरामेश्वरघुश्मेतिद्वादशज्योतिर्लिंगयुते गं-
गायमुनासरस्वतीतापीपयोष्णीकावेरीगोदावरीनर्मदेत्यादिपुण्यन-
दीविलसिते हिमवन्मेरुगोवर्द्धनक्रौंचश्रीशैलकचित्रकूटहेमकूटमहें-
द्रमलयविंध्याद्यनेकपर्वतसमान्विते मतंगादिमहानगरयुते कोङ्क-
हिरण्यशंङ्गकुब्जार्बुदमणिकर्णीवटशालग्रामसूकरमथुरागयानिष्क्र-
मणलोहार्गलप्रोतस्वामिबदरीतिचतुर्दशगुह्यस्थलविलसितेऽस्मिन्

जम्बूद्वीपे कर्मभूमौ बौद्धावतारे गंगादिसरिद्भिः पाविते भारतवर्षे नि-
खिलजनपावनपरमभागवतोत्तमशौनकादिऋषिगणसेविते पुण्य-
स्थले आर्यावर्तांतरगते ब्रह्मावर्तादमुकदिग्भागस्थितेऽमुकजनपदे
कुरुक्षेत्रादिमध्यरेखायां अमुकदिग्भागे प्रयागावधिकमध्यरेखा-
याश्च अमुकश्रीभागीरथ्या अमुकतटे अमुकक्षेत्रे सोमसूर्यान्वय-
भूभृतप्रतिष्ठिते श्रीमन्नारायणस्य नाभिकमलोद्भूतसकलजगत्स्रष्टुः
परार्द्धद्वयजीवितब्रह्मणो द्वितीयपरार्धे कल्पनां मध्येऽष्टमे श्रीश्वेतवा-
राहकल्पे स्वायंभुवादिमन्वंतराणां मध्ये सप्तमे वैवस्वतमन्वंतरे सद्यु-
गादिचतुर्युगानां मध्येअष्टाविंशातितमे कलियुगे कलिप्रथमचरणे

प्रभवादिषष्टिसंवत्सराणां मध्ये अमुकनामसंवत्सरे उत्तरादिगोलाव-
लंबिनि श्रीमार्तंडमंडले अमुकायने अमुकऋतौ अमुकमासे अमुक-
पक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे
अमुकराशिस्थिते सूर्ये अमुकराशिस्थिते चंद्रे शेषेषु ग्रहेषु यथाराशि-
स्थितेषु सत्सु एवंग्रहगुणविशिष्टेऽस्मिन् शुभलक्षणे अमुक-
गोत्रोत्पन्नोऽहं अमुकप्रवरोऽहं अमुकनामशर्म्माहं [ वा वर्माहं
वा गुप्तोऽहं ] अमुकवेदांतर्गतामुकशाखाध्यायी अहं श्रुतिस्मृति-
पुराणोक्तफलप्राप्त्यर्थं सूर्यादिनवग्रहांतर्गताकिंचित्ग्रहसूचितारिष्ट-
निरसनार्थं अंतर्दशाविदशामहादशादिजन्मदशाहीनांशपांत्यदशासु

द्वादशादिवर्षदशासु अरिष्टनिरसनार्थं सकुटुंबस्य सपरिवारस्य द्विपदचतुष्पदसहितस्य सर्वारिष्टनिरसनार्थं सकलशुभफलप्राप्त्यर्थं निरवच्छिन्नगार्हस्थ्यादिधर्मसिद्धिपूर्वकमंते मोक्षफलप्राप्त्यर्थं करिष्यमाणशिवादिप्रतिष्ठाकर्म्मणः पूर्वांगभूतस्वस्तिवाचनगणपतिपूजनब्राह्मणवरणपुण्याहवाचनकलशस्थापनमातृकापूजनसूर्यादिनवग्रहचतुषष्टियोगिनीदशदिक्पालवास्तुपूजनादिकमहं करिष्ये एवं प्रतिज्ञासंकल्पं कुर्यात् । हस्ते रक्ताक्षतपुष्पाणि गृहीत्वा स्वस्तिवाचनं कुर्यात् । ॐ स्वस्तिन इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः

स्वस्तिनो बृहस्पतिर्दधातु। पयः पृथिव्यां पय ओषधीषु पयो दिव्यतंरिक्षे पयोधाः पयस्वतीः प्रदिश्यसंतु मह्यम्। ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः स्थिरैरङ्गैस्तुष्टुवा २ सस्तनूभिर्पश्येमदेवहितं यदायु÷। आनोभद्राः ऋतवो यंतु विश्वतो दब्धासो अपरीता स उद्भिदः देवानो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवे दिवे। विष्णोरराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा। अग्निर्देवता वातो देवता सूर्यो देवता चंद्रमा देवता वसवो देवता रुद्रा देवता दित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पति-

देवता इन्द्रो देवता वरुणो देवता॥ द्यौः शांतिरंतरिक्ष ँ शांति पृथिवी शांतिरापः शांतिरोषधयः शांतिर्वनस्पतयः शांतिः शांतिर्विश्वेदेवाः शांतिर्ब्रह्म शांतिः सर्व ँ शांतिः शांतिरेव शांतिः सा मा शांतिरेधि सुशांतिर्भवतु। विश्वानि देवसवितुर्दुरितानि परासुव यद्भद्रं तं न आसुव। इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहेमतीः यथा शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम्। एतं ते देवसवितुर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे तेन यज्ञमवतेन यज्ञपतिं तेन मामवः सहस्तोमाः सहः छंदस आवृतः सहप्प्रमा ऋषयः सप्तदैव्याः पूर्वेषां पंथामनुदृश्य धीरा अन्वा-

लेभिरे रथ्योनरश्मीन् । यजाग्रतो दूरमुदैति दैवं तदुसुतस्य तथै-वैति दूरङ्गमं ज्योतिषां रेकं तन्मे मनः शिवसङ्कल्पमस्तु ॥ ॐ गणानां त्वा गणपति ँ हवामहे निधीनां त्वा निधिपति ँ हवामहे वसो मम आहमजानि गर्भध मा त्वमजासि गर्भधम् । नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो विश्वरूपे-भ्यश्चवो नमो नमः । मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ ँ समिमं दधातु ॥ विश्वेदेवा स इह मादयंतामो-म्प्रतिष्ठ एष वै प्रतिष्ठा नाम यज्ञो यत्रैतेन यज्ञेन यजंते न सर्वमेव

प्रतिष्ठितं भवतु। अथ नमस्कारपूर्वकप्रार्थना। सुमुखश्चैकदंतश्च कपिलो गजकर्णकः। लम्बोदरश्च विकटो विघ्नराजो विनायकः॥ धूम्रकेतुर्गणाध्यक्षो भालचंद्रो गजाननः। द्वादशैतानि नामानि यः पठेच्छृणुयादपि॥ विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा। संग्रामे संकटे चैव विघ्नस्तस्य न जायते॥ विघ्नावलीकुठाराय नमः। हस्त-संपुटौ संयोज्य गणनाथं प्रार्थयेत् तद्यथा॥ यत्पादपल्लवयुगं विनिधाय कुंभद्वंद्वे प्रयाणसमये स गणाधिराजः। विघ्नान्विहंतु क्षममस्य जगत्त्रयस्य गोविंदमादिपुरुषं तमहं भजामि॥ १॥ उद्यद्दिनेशरुचिरं निजहस्तपद्मैः पाशांकुशाभयवरान् दधतं गजा-

स्यम् । रक्तांबरं सकलदुःखहरं गणेशं ध्यायेत्प्रसन्नमखिलाभरणाभिरामम् ॥ २ ॥ अविघ्नं कुरु मे नित्यं विघ्नं च परिहन्यते । यात्रामंगलसिध्यर्थमेकदंत नमोऽस्तु ते ॥ इति हस्तेऽक्षतान् गृहीत्वा प्रतिष्ठां कुर्यात् । ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञᳪसमिमं दधातु विश्वे देवा स इह मादयंतामोम्प्रतिष्ठ ॥ अनेन मंत्रेण गणेशमावाहयेत् ॥ भो हेरम्ब त्वमेह्येहि त्र्यंबकेयांबिकात्मज । सिद्धिबुद्धिपतेऽध्यक्ष सर्वलोकपितः पितः ॥ नागास्य नागहार त्व गणनाथ चतुर्भुज । सिद्धिबुद्धिपतेऽध्यक्ष सर्वलोकपितः पितः ॥ भूषितः स्वायुधैर्दिव्यैः पाशांकुशपरश्वधैः । आवाहयामि

पूजार्थं रक्षार्थमध्वरस्य च ॥ इहागत्य गृहाण त्वं पूजां रक्ष च मे क्रतुम् । आगच्छ विघ्नराजेंद्र स्थाने चात्र स्थिरो भव ॥ यावत् पूजा समाप्येत तावत्त्वं संनिधो भव । आगच्छ देवदेवेश गणनाथ नमोऽस्तु ते ॥ सूर्यकोटिसमाभास गजवक्त्र चतुर्भुज । जगवक्त्र गणाध्यक्ष सर्वविघ्नविनाशन ॥ लंबोदर त्रिनेत्र त्वं आगच्छ गणनायक । अथातः संप्रवक्ष्यामि गणयागं सुशोभनम् ॥ कामिके वासिके यज्ञे विवाहे व्रतसंयमे । आदौ गणेश्वरपूजा सर्वकामफलप्रदा ॥ मासमासाधिपः पूज्यो गणेशो यो भविष्यति । येन पूजायते यज्ञे समाचार्यो वनस्पतिः ॥ कोऽसौ मासपतिर्देवः सर्वविघ्नविनाशनः ॥ श्रीकृष्ण उवाच ॥ आदौ

गणेश्वरः श्रेष्ठो विघ्ननाशो विनायकः । सर्वकामकृतौ पूज्यो यज्ञ-काले सनातनः ॥ मण्डलं च ततः कुर्यात्कोष्ठानां द्वादश स्मृतम् । सिंदूरस्थापितं देवमीशाने च विनायकम् ॥ क्रमयुक्तस्ततः स्थाप्यो मासमासाधिपः प्रभुः । मार्गे गणपतिः पूज्यः पौषे चैव विनायकः ॥ गजवक्त्रो माघमासे भालचंद्रोऽथ फाल्गुने । उपेंद्रश्चैत्रमासे च वैशाखे विघ्ननाशनः ॥ ज्येष्ठे शिवसुतः पूज्य आषाढे हरिनंदनः । श्रावणे विघ्नराजस्तु भाद्रेऽथो मोदकप्रियः ॥ आश्विने कार्तिके बीजं महाबीजं च मार्गके । विघ्नहर्ताधिके मासे एवं पूज्यो गणेश्वरः ॥ गंधपुष्पैस्तथा धूपैः कर्पूरैर्यक्षकर्दमैः । मृगाणां कुंकुमैः शुभ्रैः

सिंदूरेण विशेषतः॥ रक्तोत्पलदलैः पूज्य बिल्वपत्रैश्च केशरैः। मालतीकेतकीपुष्पैर्नानागंधैर्विचक्षणैः ॥ अर्घ्यपाद्यैश्च धूपैश्च रक्तवस्त्रेण छादयेत् । पूजां कुर्य्यात्तु देवस्य दद्यान्मोदकभोजनम् ॥ नमो मूषकमारूढ शुभकर्त्रेऽथ ते नमः । नमः कात्यायनीपुत्र लंबकर्णाय वै नमः ॥ उद्यद्रविस्वरूपाय विद्याबुद्धिविचक्षिणे । देहि मे पुत्रसौभाग्यं देहि मे सुखसंपदाम् ॥ वांच्छासिद्धिं च मे देहि विद्यां देहि यशो धनम् । शत्रवो नाशमायांतु दुर्जनो नाशतामियात्॥ स्वानां चैव हितार्थाय प्रार्थयित्वा गणेश्वरम् । आदौ पूज्य गणेशं तु शांतिपाठमथाचरेत् ॥ नाशयेत् सर्वविघ्नानां कल्याणं जायते ध्रुवम् ।

कृष्णेन भाषितं पूर्वं देवतानां हितार्थिना ॥ उत्पाते विघ्नसंभूमौ पूजयेत् गणनायकम् इत्यावाह्य । अथ संकल्पः । ॐ अस्य श्रीसदाशिवादिप्रतिष्ठायागकर्मणः सांगतासिद्ध्यर्थं श्रीगणेशदेवस्य पंचोपचारैर्यथाविधिपूजनमहं करिष्ये इतिप्रतिज्ञां कृत्वा अथ पुराणोक्तगणपतिपूजनम् । अथासनम् । सुमुखाय नमस्तुभ्यं गणाधिपतये नमः । पुष्पासनं मया दत्तं विघ्नपुजं निवारय ॥ गणपतये आसनं समर्पयामि । अथ पाद्यम् । उमापुत्राय देवाय सिद्धिबंद्याय ते नमः । पाद्यं गृहाण देवेश विघ्नव्यूहं निवारय ॥ लंबोदराय पाद्यं समर्पयामि । अथार्घ्यम् । अनेनार्घ्यप्रदानेन वांछितार्थं प्रयच्छ

मे । एकदंत महाकाय नागयज्ञोपवीतक ॥ गणाधिदेवदेवेश गृहाणार्घ्यं नमोऽस्तु ते । द्वैमातुराय नमः अर्घ्यं समर्पयामि । अथ स्नानम् । नर्मदाचंद्रभागादिगंगासंगमजैर्जलैः । स्नापितोऽसि मया देव विघ्नसंघं निवारय ॥ उमापुत्राय नमः स्नानं समर्पयामि । अथ उपवीतम् । सूर्यकोटिसमाभासनागयज्ञोपवीतक । सुवर्णसूत्रैरचितमुपवीतं गृहाण मे ॥ इभवक्त्र नमस्ते तु गृहाण परमेश्वर । ब्रह्मसूत्रं मया दत्तं विघ्नपुंजं निवारय ॥ विघ्नेश्वराय नमः उपवीतं समर्पयामि । अथ वस्त्रम् । रक्तांबरधराधीश पाशांकुशधरेश्वर । वस्त्रयुग्मं मया दत्तं गृहाण परमेश्वर ॥ गणपतये वस्त्रं समर्पयामि ।

अथ गंधम् । ईशपुत्र नमस्तुभ्यं नमो मूषकवाहन । गंधं गृहाण देवेश विघ्नपुजं निवारय ॥ गणाध्यक्षाय नमः गंधं समर्पयामि । अथाक्षताः । रक्तचंदनसंमिश्रैरक्षतैः पूजयाम्यहम् । विघ्नहर्त्रे नमः अक्षतान् समर्पयामि । अथ पुष्पाणि । पाटलामल्लिकादूर्वाशतपत्राणि वै प्रभो । पुष्पाणीश गृहाण त्वं विघ्नपुंजं निवारय ॥ पुष्पाणि समर्पयामि। अथ धूपम् । लम्बोदर विशालाक्ष धूम्रकेतो नमो नमः। धूपं गृहाण देवेश विघ्नपुंजं निवारय ॥ गणपतये धूपं समर्पयामि । अथ दीपम्। घृताक्तिवर्त्तिसंयुक्तं वह्निना योजितं मया। दीपं गृहाण देवश रुद्रप्रिय नमोऽस्तु ते ॥ वामनाय नमः दीपं समर्पयामि ।

अथ नैवेद्यम्। नमो मोदकहस्ताय भालचंद्राय ते नमः । नैवेद्यं गृह्यतां देव विघ्नपुंजं निवारय ॥ गणपतये नैवेद्यं समर्पयामि । अथ फलम्। इदं फलं मया देव स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥ फलं समर्पयामि । अथाचमनम्। गजानन नमस्तुभ्यं विनायक नमो नमः । आचम्यतां गणाध्यक्ष विघ्नपुंजं निवारय ॥ हेरम्बाय आचमनं समर्पयामि । अथ ताम्बूलम् । पूगीफलं सकर्पूरं नागवल्लीदलैर्युतम्। नानाभोग्यसमायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ विघ्नराजाय ताम्बूलं समर्पयामि । अथ दक्षिणा । हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।

अनंतपुण्यफलदमतः शांतिं प्रयच्छ मे ॥ विनायकाय नमः दक्षिणां समर्पयामि । अथ नीराजनम् । चंद्रादित्यौ च धरणी विद्युदग्निस्तथैव च । त्वमेव सर्वज्योतींषि आर्तिक्यं प्रतिगृह्यताम् ॥ गणेश्वराय नीराजनं समर्पयामि । अथ प्रदक्षिणा । गणेश्वर नमस्ते तु सर्वसिद्धिप्रदायक । निर्विघ्नं कुरु देवेश सर्वकार्येषु सर्वदा ॥ धूम्राय नमः प्रदक्षिणां निवेदयामि । प्रार्थनापूर्वकनमस्कारः । विघ्नेश्वराय वरदाय सुरप्रियाय लंबोदराय सकलाय जगद्धिताय । नागाननाय सितसर्पविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ॥ भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय शुभदाय सुरेश्वराय ।

विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवदनाय नमो नमस्ते ॥ इति प्रार्थनापूर्वकनमस्कारः । अनेन पूजनेन पाद्यादिभिः कृतेन गणपतिपूजनेन श्रीगणपतिर्देवः प्रीयताम् । गणपतिपूजनकृतस्य विधेः सर्वं परिपूर्णमस्तु । इति गणपतिपूजनम् । अथ ॐकार-पूजनम् । आवाहयाम्यहं देवमोंकारं परमेश्वरम् । त्रिमात्रं त्र्यक्षरं दिव्यं त्रिपदं च त्रिदैवकम् ॥ त्र्यक्षरं त्रिगुणाकारं सर्वाक्षरमयं शुभम् । त्र्यणवं प्रणवं हंसं स्रष्टारं परमेश्वरम् ॥ अनादिनिधनं देवमप्रमेयं सनातनम् । परं परतरं बीजं निर्मलं निष्कलं शुभम् ॥ ॐ आब्र-ह्मन् ब्राह्मणो ब्रह्मवर्चसि जायतामाराष्ट्रे राजन्यः शूर इषव्योति

व्याघी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिपुरंधिर्योषा जिष्णुरथेष्ठाः सभेयोयुवास्ययजमानस्य वीरो जायतां निकामेन कामेनः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यंतां योगक्षेमो नः कल्पताम् । ॐ इत्यावाह्य गंधाक्षतपुष्पधूपदीपनैवेद्यतांबूलदक्षिणा एतैः पंचोपचारैः पूजयेत् । नमस्कारं कुर्यात् । ॐकारं बिंदुसंयुक्तं नित्य ध्यायंति योगिनः । कामदं मोक्षदं चैव ॐकाराय नमो नमः ॥ अनेन पूजनेन ॐकारदेवता प्रीयतां नमः । हस्ते अक्षतान् गृहीत्वा मातृमावाहयेत् ॥ गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ हृष्टिः पुष्टिस्तथा तुष्टि-

स्तथात्मकुलदेवता ॥ षोडशमातृभ्यो नमः आवाहयामि स्थापयामि गंधादिभिः संपूज्य ततो नमस्कारं कुर्यात् । ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही च तथैंद्राणी चामुंडा सप्तमातरः ॥ कुलदेव्यंतगौर्यादिषोडशमातृभ्यो नमः । अनेन पूजनेन षोडश-मातृकाः प्रीयंतां नमः । अथ योगिनीपूजा । हस्ते अक्षतान् गृहीत्वा योगिनीमावाहयेत् । ॐ आवाहयाम्यहं देवीं योगिनीं परमेश्वरीम् । योगाभ्यासेन संतुष्टा परध्यानसमन्विता ॥ दिव्यकुंडलसंकाशा दिव्यज्वालात्रिलोचना । मूर्तिमती ह्यमूर्त्ता च उग्रा चैवोग्ररूपिणी ॥ अनेकभावसंयुक्ता संसारार्णवतारिणी । यज्ञं कुर्वंतु निर्विघ्नं श्रेयो

यच्छंतु मातरः ॥ इत्यावाह्य गंधादिभिः संपूजयेत् । ततो नमस्कारं कुर्यात् । ॐ दिव्ययोगी महायोगी सिद्धियोगी गणेश्वरी । प्रेताशी डाकिनी काली कालरात्रिर्निशाचरी ॥ हूंकारी सिद्धवेताली खर्परी भूतगामिनी । ऊर्ध्वकेशी विरूपाक्षी शुष्कांगी मांसभोजनी ॥ फूत्कारी वीरभद्राक्षी धूम्राक्षी कलहप्रिया । रक्ता च घोररक्ताक्षी विरूपाक्षी भयंकरी ॥ चौरिका मारिका चंडी वाराही मुंडधारिणी । भैरवी चक्रिणी क्रोधा दुर्मुखी प्रेतवासिनी ॥ कालाक्षी मोहिनी चक्री कंकाली भुवनेश्वरी । कुण्डला तालकौमारी यमदूती करालिनी ॥ कौशिकी यक्षिणी यक्षी कौमारी यंत्रवाहिनी । दुर्घटे विकटे

घोरे कपाले विषलंघने ॥ चतुःषष्टिसमाख्याता योगिन्यो हि वरप्रदाः । त्रैलोक्ये पूजिता नित्यं देवमानुषयोगिभिः ॥ अनेन पूजनेन योगिनीदेवताः प्रीयंतां नमः । अथ नवग्रहपूजनम् । अथ सूर्यावाहनम् । रक्तपुष्पाक्षतैः मध्ये वर्तुलाकारे चक्रे रविमावाहयेत् ॐ दिवाकरं सहस्रांशुं सुरासुरनमस्कृतम् । लोकनाथं विश्वनेत्रं सूर्यमावाहयाम्यहम् ॥ ततः पाद्यादिभिः संपूजयेत् नमस्कारं कुर्यात् । ॐ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेन देवो याति भुवनानि पश्यन् ॥ अनेन पूजनेन सूर्य देवता प्रीयताम् ॥ अथ चंद्रपूजनम् । आग्नेय्यामर्धचंद्राकारे श्वेतपु-

ष्पाक्षतैश्चंद्रमावाहयेत् । ॐ हिमरश्मिं निशानाथं तारकाभिः समन्वितम् । औषधीनां तु राजानं सोममावाहयाम्यहम् ॥ ततः पाद्यादिभिः संपूज्य नमस्कारं कुर्यात्। ॐइमं देवा असपत्नꣳ सुवध्वं महते क्षत्राय महते ज्यैष्ठाय महते ज्यानराजायेंद्रस्येंद्रियाय इम-ममुष्य पुत्रममुष्यै पुत्रमस्यै विष एष वोमिराजा सोमो अस्माकं ब्राह्मणानाꣳराजा ॥ अनेन पूजनेन सोमदेवता प्रीयताम् । याम्य-त्रिकोणे चक्रे रक्तपुष्पाक्षतैः भौममावाहयेत् । धरणीगर्भसंभूतं लोहितांगं सुवर्चसम् । कुमारं क्रूरकर्माणं भौममावाहयाम्यहम् ॥ ततः पाद्यादिभिः संपूज्य नमस्कारं कुर्यात् । ॐ अग्निर्मूर्द्धा दिवः

ककुत्पतिः पृथिव्यां अयं अपाꣳरेताꣳसि जिन्वति। अनेन पूजनेन भौमदेवता प्रीयताम् । अथ बुधपूजनम् । ऐशान्यां पीतपुष्पाक्षतैः बुधमावाहयेत् । बुद्धं बुद्धिप्रदातारं सोमवंशविवर्धनम् । यजमान-हितार्थाय बुधमावाहयाम्यहम् ॥ ततः पाद्यादिभिः संपूज्य नम-स्कारं कुर्यात् । ॐ उद्बुधस्वाग्ने प्रतिजागृही त्वमिष्टापूर्तेसꣳसृथा-मयं च अस्मिन् सधस्थे अध्युतरस्मिन्विश्वेदेवायजमानस्यसीदत । अनेन पूजनेन बुधदेवता प्रीयताम् । अथ बृहस्पतिपूजनम् । उत्तरे पीतपुष्पाक्षतैर्गुरुमावाहयेत् । बुद्धिश्रेष्ठोऽगिरः पुत्रोदेवानां यो गुरुः स्मृतः । तमिंद्रमंत्रिणं भक्त्या गुरुमावाहयाम्यहम् ॥ ततःपाद्या-

दिभिः संपूज्य नमस्कारं कुर्यात्। ॐ बृहस्ते अतियदर्यो अर्हा द्युमद्विभाति क्रतुमज्जनेषु। यदीदयच्छवस ऋतप्रजाततदस्मासु द्रविणं धेहि चित्रम्॥ अनेन पूजनेन बृहस्पतिर्देवता प्रीयतां नमः। अथ शुक्रपूजनम्। पूर्वे श्वेतपुष्पाक्षतैः शुक्रमावाहयेत्। प्रविष्टो जठरे शंभोर्निसृतः पुनरेव यः। तं सुरारिगुरुं भक्त्या शुक्रमावाहयाम्यहम्॥ ततः पाद्यादिभिः संपूजयेत्। पुनः नमस्कारं कृत्वा॥ ॐअन्नात् परिस्रुतो रसं ब्रह्मणा व्यपिबत् क्षत्रं पयः सोमं प्रजापतिः ऋतेन सत्यमिंद्रियं विपानꣳशुक्रमंधस इंद्रस्येन्द्रियमिदं पयोमृतं मधु॥ अनेन पूजनेन शुक्रदेवता प्रीयतां नमः। अथ शनिपूजनम्। पश्चिमे

कृष्णाक्षतैः शनिमावाहयेत् । धर्मराजानुजं देवं भिन्नांजनसमप्रभम् । च्छायामार्तंडसंभूतं शनिमावाहयाम्यहम् ॥ पाद्यादिभिरर्चयेत् नमस्कारं कुर्यात् । ॐशन्नो देवीरभिष्टय आपो भवंतु पीतये । शंय्योरभिस्रवंतु नः । अनेन पूजनेन शनिदेवता प्रीयताम् । अथ राहुपूजनम् । नैर्ऋत्यां धूम्रपुष्पाक्षतैः राहुमावाहयेत् । चक्रेण छिन्नमूर्द्धानं विष्णुना च निरीक्षितम् । सैंहिकेयं महाकायं राहुमावाहयाम्यहम् ॥ ततः पाद्यादिभिः संपूज्य पश्चान्नमस्कारं कुर्यात् । ॐ कया नश्चित्र आभुवदूती सदावृधः सखा । कया शचिष्ठयावृता ॥ अनेन पूजनेन राहुदेवता प्रीयताम् । अथ केतुपूजनम् । वायव्यां

धूम्रपुष्पाक्षतैः केतुमावाहयेत् । अंजनाभं महारुद्रं बहुरूपं महाग्रहम् । महाकायं क्रूरकृत्यं केतुमावाहयाम्यहम् ॥ पाद्यादिभिरर्चयेत् । ततो नमस्कारं कुर्यात् ॥ ॐ केतुं कृण्वन्नकेतवे पेशोमर्यादपेशसे । समुषद्भिरजायथा ॥ अनेन पूजनेन केतुदेवता प्रीयताम् । पुनः नमस्कारं कुर्यात् । ॐ ब्रह्मा मुरारिस्त्रिपुरांतकारी भानुः शशी भूमिसुतो बुधश्च । गुरुश्च शुक्रः शनिराहुकेतवः सर्वे ग्रहाः शांतिकरा भवंतु ॥ इति नवग्रहपूजनम् । अथ लक्ष्मीपूजनम् । हस्ते अक्षतान् गृहीत्वा आवाहनं कुर्यात् ॥ ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णं न्निषाणमुंम

इषाण सर्वलोकं म इषाणः । ततः पाद्यादिभिरर्चयेत् । पश्चान्नमस्कारं कुर्यात्। ॐ या सा पद्मासनस्था विपुलकटितटिः पद्मपत्रायताक्षी गंभीरावर्तनाभिः स्तनभरनमिता शुभ्रवस्त्रोत्तरीया। लक्ष्मैर्दिव्यैर्गजेंद्रैर्मणिगणरचितैः स्नापिता हेमकुंभैर्नित्यं सा पद्महस्ता वसतु मम गृहे सर्वमांगल्ययुक्ता॥ १॥ अनेन पूजनेन लक्ष्मीदेवता प्रीयतां नमः। अथचतुर्वेदपूजनम्। हस्ते रक्ताक्षतान् गृहीत्वावाहनं कुर्यात्। ऋग्वेदोऽथ यजुर्वेदः सामवेदस्तथैव च । अथर्वसंहिताः सर्वे रक्षां कुर्वंतु ते सदा ॥ ततः पाद्यादिभिरर्चयेत्तदनु नमस्कारः। पुन एवं पठेत्। अथ सप्तर्षिपूजनम्। पाद्यादिभिः संपूज-

येत् पुनः नमस्कारः। गौतमोऽथ भरद्वाजो विश्वामित्रस्तथैव च।
जमदग्निर्वसिष्ठश्च अत्रिः कश्यप एव च॥ अनेन पूजनेन सप्तर्षिदेवताः
प्रीयंतां नमः। अथ दशदिक्पालपूजनम्। हस्तेऽक्षतान् गृहीत्वा पूर्वे
इंद्राय नमः पाद्यं अर्घ्यं आचमनं गंधाक्षतपुष्पधूपदीपनैवेद्यतांबूल-
दक्षिणानमस्कारं कुर्यात्। त्रातारमिंद्रमवितारमिंद्रꣳहवे हवे सुहवꣳ
शूरमिंद्रं ह्वयामि शक्रं पुरुहूतमिंद्रꣳस्वस्तिनो मघवा धात्विंद्रः। अनेन
पूजनेन इंद्रदेवता प्रसन्नो भवतु। अग्नये नमः पाद्यं अर्घ्यं आचमनं
गंधाक्षतपुष्पधूपदीपनैवेद्यताम्बूलदक्षिणानमस्कारं कुर्यात्। ॐ
त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अवयासिसीष्ठाः। यजिष्ठो

वह्नितमः शोशुचानो विश्वाद्वेषाꣳसि प्रमुमुग्ध्यस्मत् ॥ अनेन पूज-
नेन अग्निर्देवता प्रसन्नो भवतु । दक्षिणे धर्मराजाय नमः पाद्यं
अर्घ्यं आचमनं गंधाक्षतपुष्पधूपदीपनैवेद्यदक्षिणानमस्कारं कुर्यात् ।
यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे देवस्त्वा सविताम‌ध्वानक्तु
पृथिव्याः सꣳस्पृशस्पाहि अर्चिरसि सोर्चिरसि तपोसि । अनेन पूजनेन
धर्मराजदेवः प्रीयताम् । नैर्ऋत्ये नैर्ऋत्याय नमः पाद्यं अर्घ्यं आच-
मनं गंधाक्षतपुष्पधूपदीपनैवेद्यताम्बूलदक्षिणानमस्कारं कुर्यात् । ॐ
असुन्वंतमयजमानमिच्छस्तेनस्येत्यादिमन्विहि तस्करस्य अन्य-
मस्मदिच्छसा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु । अनेन पूज-

नेन निर्ऋतिर्देवता प्रीयताम् । पश्चिमे वरुणाय नमः पाद्यं अर्घ्यं आचमनं गंधाक्षतपुष्पधूपदीपनैवेद्यदक्षिणानमस्कारं कुर्यात् । ॐ वरुणस्योत्तंभनमसि वरुणस्य स्कंभसर्जनीस्थो वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद ॥ अनेन पूजनेन वरुणदेवता प्रीयताम् । वायव्यै वायवे नमः पाद्यं अर्घ्यं आचमनं गंधाक्षतपुष्पधूपदीपनैवेद्यताम्बूलदक्षिणानमस्कारं कुर्यात् । ॐ आनोनियुद्भिः शतिनीभिरध्वरꣳसहस्रिणीभिरुपयायज्ञं वायो अस्मिनुत्सवे मादयस्व यूयं पातस्वस्तिभिः सदा नः । अनेन पूजनेन वायुदेवता प्रीयताम् । उत्तरे कुबेराय नमः पाद्यं अर्घ्यं आच-

मनं गंधाक्षतपुष्पधूपदीपनैवेद्यतांबूलदक्षिणानमस्कारं कुर्यात् ॐ वयꣳसोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावंतः सचेमहि। भो कुबेरदेवता अनेन पूजनेन प्रसन्नो भवतु। ऐशान्यां महारुद्राय नमः पाद्यं अर्घ्यं आचमनं गंधाक्षतपुष्पधूपदीपनैवेद्यतांबूलदक्षिणान-मस्कारं कुर्यात्। ॐ तमीशानां जगतः तस्थुषस्पतिं धियं जिन्व-मवसे हूमहे वयम्। पूषानो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये॥ अनेन पूजनेन रुद्रदेवः प्रीयताम्। ऊर्ध्वं ब्रह्मणे नमः। पाद्यं अर्घ्यं आचमनं गंधाक्षतपुष्पधूपदीपनैवेद्यतांबूलदक्षिणानम-स्कारं कुर्यात्। अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ

सजोषाः। यः शङ्सते स्तुवते धायि पज्रं इन्द्रज्येष्ठा अस्मा अवंतु देवाः। अनेन पूजनेन ब्रह्मदेवः प्रीयतां नमः। नैर्ऋत्यवरुणयोर्मध्ये अनंतमावाहयेत्। अथातः संप्रवक्ष्यामि यदुक्तं वास्तुपूजनम्। येन पूजाविधानेन कर्मसिद्धिस्तु जायते॥ अनंतं पुण्डरीकाक्षं फणाशतविभूषितम्। विद्युत्बंधुकसाकारं कूर्मारूढं प्रपूजयेत्। प्रथमं पयस्नानं पश्चात् शुध्यर्थं जलस्नानं तदनु पाद्यं अर्घ्यं आचमनं गंधाक्षतपुष्पं धूपदीपनैवेद्यताम्बूलदक्षिणानमस्कारं। ॐ स्योना पृथिवीनो भवानृक्षरानिवेशनी यच्छानशर्मसप्रथाः। ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु ये अंतरिक्षे ये दिवि तेभ्यः सर्पेभ्यो

नमः । अनेन पूजनेन वास्तुदेवता आयुष्कर्ता वृद्धिकर्ता अस्मिन्यज्ञे वरदो भव । अथ कलशस्थापनम् । ऋग्वेदावाहनं कुर्यात् । ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजं होतारं इति ऋग्वेद इहा-गच्छ । अथ यजुर्वेदावाहनम् । ॐ इषेत्वाइषेत्वोर्ज्जेत्वा वायवस्थ-देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्म्मण आप्यायध्वमग्न्या इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्मावस्तेन ईशतमाघशꣳसो द्ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून् पाहि यजुर्वे-दइहागच्छ । अथ सामवेदावाहनम् । ॐ अग्न आयाहि वीतये गृहाणानो हव्यदातये निहोता सत्सु बर्हिषिः सामवेद इहागच्छ ।

अथाथर्वावाहनम् । ॐ शन्नो देविरभिष्टये आपो भवंतु पीतये । शंयोरभिस्रवंतु नः । अथर्ववेदेहागच्छ भूरसीति भूमिं स्पृशेत् । ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री। पृथिवीं यच्छ पृथिवीं दृँह पृथिवीम्माहिँसीः आजिघ्रकलशा-मावाहयित्वा। ॐ विशंत्विंदवः पुनरुर्जानिवर्चस्वसानसहस्रं धुक्ष्वो-रुधाव्यपयस्वतीपुनर्माविद्गषियिः। अनेन मंत्रेण मंडलोपरि कलशं स्थापयेत् । वरुणस्यो इति मंत्रेण जलं क्षिपेत् । ॐ वरुणस्योत्तं-भनमसि वरुणस्य स्कंभसर्जनीस्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद । अश्वत्थपत्र

प्रक्षेपः । ॐ अश्वत्थेवो निषदनं पर्णे वोसवतिकृतागोभाजाइत्कि-
लासथ जत्सनवस्थपुरुषम् । अथ वटपत्रप्रक्षेपः । वटोऽसि श्रेष्ठोऽसि
शिवगृहोऽसि साक्षात्सदासिद्धप्रपूजितोऽसि आगच्छ देव कलशे
सुरूपे कुरु समृद्धिं वटदेव नित्यम् । अथ दूर्वाप्रक्षेपः । ॐ कांडात्
कांडात् प्ररोहंति पुरुषः पुरुषस्परिएवानो दूर्वेण प्रतनु सहस्रेण
शतेन च । अथ कुशप्रक्षेपः । ॐ वसोः पवित्रमसि शतधारं वसोः
पवित्रमसि सहस्रधारं देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधा-
रेण सुप्वाकामधुक्षः । अथ पूंगीफलप्रक्षेपः । ॐ याः फलिनीर्याअ-
फला अपुष्पायाश्च पुष्पिणीः बृहस्पतिप्रसूतास्तानो मुंचन्त्वꣳहसः ।

अथ आम्रपत्रप्रक्षेपणम् । ॐ अंबे अंबिके अम्बालिके न मानयति कश्चन । ससस्त्यश्वकसुभद्रिकांपीलवासिनी । इति आम्रपत्राणि क्षिपेत् ॥ गंधाक्षतपुष्पं तूष्णीं क्षिपेत् ॥ हिरण्येति मंत्रेण द्रव्यं क्षिपेत् । ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् । सदाधारपृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम । अथ पंचरत्नानि प्रक्षिपेत् । कनकं कुलकं नीलं पद्मरागं च मौक्तिकम् । एतानि पंचरत्नानि प्रक्षेप कलशे यथा । ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे । ॐ अश्वावतीर्गोमती न उषासो वीरवती सदमिच्छंतु भद्राघृतं दुहाना विश्वतपर्यीता यूयं पातस्व-

स्तिभिः सदा नः। अथ सर्वौषधिप्रक्षेपः। याः ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरामनैनुबभ्रूणामहं शतं धामानि सप्त च ताश्च। सिद्धार्थः कुष्ठरजनीद्वयलोध्रमुस्तलोमजशैलं फलिनीमुरमासयुक्ता॥ अथ सप्तधान्यप्रक्षेपः। ॐ व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे नीवाराश्च मे गोधूमाश्च मे मसूराश्च मे यज्ञेन कल्पंतां॥ अथ सप्तमृत्तिकाप्रक्षेपः। ॐ अश्मा च मे मृत्तिकाश्च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मे श्यामं च मे लोहं च मे शीसं च मे त्रपुश्च मे यज्ञेन कल्पंतां। ॐ स्योना पृथिवीनो भवानृक्षरानिवेशनी

यच्छानः शर्मसप्रथाः। इति सप्तमृत्तिकाः॥ अथ धान्यस्पर्शनम्। ॐ धान्यमसि धिनुहि देवान् प्राणायत्वोदानाय त्वा व्यानाय त्वा दीर्घामनुप्रसितिमायुषेधान् देवो वः सविता हिरण्यपाणिः प्रतिगृ-भ्णात्वछिद्रेण पाणिना चक्षुषे त्वा महीनां पयोसि॥ अथ पुनर्ज-लदानम्। ॐ समुद्राय त्वा वाताय स्वाहा सरिताय त्वा वाताय स्वाहा अनाधृष्णाय त्वा वाताय स्वाहा प्रतिधृष्याय त्वा वाताय स्वाहा अवस्यवे त्वा वाताय स्वाहा अथ धूपम्। ॐ वसवस्त्वा धूपयंतु गायत्रेण छंदसांगिरस्वद्रुस्त्वा धूपयंतु त्रैष्टुप्भेऽनुष्टुप्-च्छंदः सांगिरसदादित्या धूपयंतु जागतेन छंदसांगिरस्वद्विश्वेत्वा-

देवोवैश्वानरा धूपयंतुऽनुष्टुप्भेनछंदसांगिरस्व इंद्रस्त्वा धूपयंतु वरुण-स्त्वाधूपयंतु विष्णुस्त्वा धूपयंतु ॐ धूरसि धूर्वधूर्वतं धूर्वंत योस्मां धूर्वति तं धूर्वयं वयं धूर्वाम देवानामसि वह्नितमꣳसस्नितमयं तमं जुष्टतमदेवहूतमम् । अथ दीपम् । अग्निर्ज्योतिर्ज्योतिरग्निस्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यस्वाहा अग्निर्वर्चोज्योतिर्वर्चस्वाहा सूर्यो वर्चो ज्योतिर्वर्चस्स्वाहा ज्योतिः सूर्यज्योतिः स्वाहा । अथ नैवेद्यम् । ॐ अभयते भयस्य नो धेह्यनमीवस्य शुष्मिण प्रप्रदातारं तारिषं उर्जनो धेहि द्विपदे चतुष्पदे इति नैवेद्यम् । अथ पूर्णपात्रम् । ॐ पूर्णादार्वि-परापत सुपूर्णा पुनरापत वस्नेव विक्रीण इयमूर्जꣳशतक्रतो इति

कलशोपरि पूर्णपात्रं निधाय तदुपरि श्रीश्चेति मंत्रेण मूर्त्या सह नारिकेलं निधानं तन्नारिकेलं हस्ते आदाय मंत्रं पठेत्। श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणमुम्म इषाण सर्वलोकं म इषाण इति नारिकेलं निधापयेत् अथ युग्मवस्त्रेणाच्छादनम्। ॐ सुताज्योतिसासंहशर्मवरुथमासदथव:वसोअग्नेविश्वरूप॑ꣳसव्ययस्यविभावसो। इति युग्मवस्त्रेण आच्छादयेत्॥ अथ प्रतिष्ठा। ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तन्नोत्वरिष्टं यज्ञꣳसमिमं दधातुविश्वेदेवासइह मादयंतामों प्रतिष्ठ। मनसा समुदꣳसमातं तन्मनसैव तत् सर्व-

माप्नोति बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳसमिमं दधातु। ॐ त्विद्दं तत्संदधाति विश्वेदेवाः सह मादयंतामिति सर्वे विश्वेदेवाः सर्वेणैवेति तत्संदधाति सयदि कामायेत ब्रूयात् प्रतिष्ठेति एष वै प्रतिष्ठानामयज्ञो यत्रैतेन यज्ञेन यजंतेन सर्वमेव प्रतिष्ठितं भवतु। अथ कलशे गंगाद्यावाहनम् । सर्वे समुद्रास्सरितस्तीर्थानि जलदा नदाः। आयांतु यजमानस्य दुरितक्षयकारकाः॥ काशी कुशस्थली मायाऽवन्त्ययोध्या मधोः पुरी । शालग्रामं सगोकर्णं नर्मदा च सरस्वती ॥ तीर्थान्येतानि कुंभेऽस्मिन् विशंति ब्रह्मशासनात्। झषारूढा सरोजाक्षी पद्महस्ता शशिप्रभा ॥ आगच्छंतां सरिज्ज्येष्ठा

गंगा पापप्रणाशिनी । नीलोत्पलदलश्यामा पद्महस्ताम्बुजेक्षणा ॥ आयंतु यमुना देवी कूर्मायानस्थिता सदा । प्राची सरस्वती पुण्या पयोष्णी गौतमी तथा ॥ चर्मिला चंद्रभागं च सरयुर्गण्डकीस्तथा । जम्बुका च शतद्रुश्च कलिका सुप्रभा तथा ॥ वितस्ता च विपाशा च नर्मदा च प्रिया पुनः । गोदावरी महावर्ता शर्करावर्तमार्जुनी ॥ कावेरी कौशिकी चैव तृतीया च महानदी । विटंका प्रतिकूला च सोमनंदा च विश्रुता ॥ करतोया वेत्रवती रेणुका विणुका च या । आत्रेयगंगा वैतरणी काश्मीरी ल्हादिना च या ॥ पावनी च शवत्रा सा कल्माषा शंशिनी तथा । वसिष्ठा च अपाया च सिधुवत्याहृणी

तथा॥ ताम्रा चैव त्रिसंध्या च तथा मंदाकिनी परा। तैलकाशी च पारा च दुन्दुभि नकुली तथा ॥ नीलगंधा च बोधा च पूर्णचंद्रा शशि-प्रभा। अमरेशं प्रभासं च नैमिषं पुष्करं तथा ॥ आषाढिडिण्डिभारतं भारभूतं च लकुलम् । हरिश्चंद्रपरं गुह्यं गुह्यं मध्यमकेश्वरम् ॥ श्रीपर्वतं समाख्यातं जलेश्वरमतःपरम्। आम्रातकेश्वरं चैव महा-कालं तथैव च॥ केदारमुत्तमं गुह्यं महाभैरवमेव च। गंगायां च कुरु-क्षेत्रं पश्चात् कनखलं तथा ॥ विमलं चंद्रभासं च माहेन्द्रमष्टमं तथा । वस्त्रापदरुद्रकोटिमाविमुक्तं महालयम् ॥ गोकर्णं भद्रकर्णं च हेमाशस्थानमंदिरम् । एता नद्यश्च तीर्थानि गुह्यक्षेत्राणि सर्वशः ॥

तानि सर्वाणि कुंभेऽस्मिन् विशंतु ब्रह्मशासनात् । इत्यादिरीत्या कलशे तीर्थादि आवाह्य अथ कलशाभिमंत्रं कुर्यात् ॥ कलशस्य मुखे विष्णुः कंठे रुद्रः समाश्रितः । मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुंधरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अंगैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥ ततः कलशप्रार्थना । देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि यदा कुंभ विधृतो विष्णुना स्वयम् ॥ त्वत्तः सर्वाणि तीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठंति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ।

आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ त्वयि तिष्ठंति सर्वेऽपि यतः कामफलप्रदाः । त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥ सांनिध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ इति कलशं स्पृष्ट्वा स्वांगानि स्पृशेत् । शिरसि मे सौभाग्यमस्तु मस्तके श्रीकांतिरस्तु चक्षुषोः सुतेजोऽस्तु श्रोत्रयोर्मे श्रवणेंद्रियशक्तिरस्तु बाह्वोर्मेबलमस्तु इत्यादिरीत्याङ्गानि स्पृशेत् । अथ प्रार्थना॥ कैलासशिखरे देवी विंध्याद्रेर्हिमपर्वतात् । आगत्य घटसमीपे त्वं मृन्मये संन्निधिं कुरु ॥ स्थापितासि मया भद्रे श्रीफले मृण्मये तथा । आयुरारोग्यमैश्वर्यं देहि देवि सदा मम ॥ इति प्रार्थना ॥ अथ प्राणप्रतिष्ठा ॥ ॐ आं ह्रीं क्रीं

यं रं लं वं शं षं सं अमुकजीवस्य प्राणा इहागच्छंतु सुखं चिरं तिष्ठंतु स्वाहा आत्मेहागच्छतु सुखं चिरं तिष्ठतु स्वाहा इन्द्रियाणी-हागच्छंतु सुखं चिरं तिष्ठंतु स्वाहा। अथ षोडशोपचारपूजनं॥ अथ दुर्गावाहनम् । ध्यायामि मनसा कालीं यंत्रमध्ये व्यवस्थिताम् । आवाहयेच्च हृदये संसारभयहारिणीम् ॥ कल्याणीं जननीं सत्यां कामदां करुणाकराम् । अनन्तशक्तिसंपन्नां शिवे त्वावाहयाम्य-हम् ॥ देवेशि भक्तसुलभे परिवारसमन्विते । यावत्त्वां पूजयि-ष्यामि तावद्देवि इहावह ॥ इत्यावाहनम् । अथासनम् । महाकालि सुरेशानि ज्ञानमार्गप्रदे शिवे । आसनं मणिभूषाढ्यं गृहाण त्वं

सुरेश्वरि ॥ इत्यासनम् । अथ पाद्यम् । कात्यायनि महाकालि मधुकैटभघातिनि । पाद्यं गृहाण देवेशि भद्रकाली नमोऽस्तु ते ॥ इति पाद्यम् । अथार्घ्यम् । त्रैलोकेशि जगत्पूज्ये सर्वदानवभंजनि । अष्टांगार्घ्यं गृहाण त्वं देवि विश्वार्तिहारिणि ॥ इत्यर्घ्यम् । अथ स्नानम् । ज्ञानमूर्ते भद्रकालि दिव्यमूर्ते सुरेश्वरि । स्नानं गृहाण देवेशि तीर्थोदकविभूषितम् ॥ इति स्नानम् । अथ वस्त्रम् । वस्त्रं स्वच्छं महार्हं वै पट्टसूत्रं विनिर्मितम् । गृहाण सुभगे देवि पट्टकूलं सुरार्चितम् ॥ इति वस्त्रम् । अथालंकारम् । सुरासुरशिरोरत्ननिघृष्ट-चरणांबुजे । अलंकारं गृहाण त्वं नानारत्नविभूषितम् ॥ इत्यलं-

कारा: ॥ अथ चंदनम् । श्रीखंडागरुकस्तूरीरोचनादिभिसंयुतम् । गृहाण गंधं देवेशि सर्वकामफलप्रदे ॥ अथ पुष्पाणि ॥ नानापुष्पविचित्राढ्यां पुष्पमालां सुशोभनाम् । प्रयच्छामि यदा देवि गृहाण त्वं सुरेश्वरि ॥ अथ धूपम् । गुगुलघृतसंयुक्तमगुर्वादिसमायुतम् । गंधं गृहाण देवेशि भद्रकालि नमोऽस्तु ते ॥ अथ दीपम् । रक्तसूत्रलसद्वर्ति गोघृतेन च पूरितम् । दीपं गृहाण सर्वेशि नमस्त्रैलोक्यसुंदरि ॥ अथ नैवेद्यम् । गृहाण देवि नैवेद्यं नानाभक्ष्यसमन्वितम् । प्रयच्छामि यदा देवि अन्नं च प्रतिगृह्यताम् ॥ अथ जलम् । जलं गृहाण देवेशि शुद्धं निर्मलमेव च । तीर्थोदकं मया दत्तं पानीयं

प्रतिगृह्यताम् ॥ अथ ताम्बूलम् । गृहाण देवि तांबूलं कर्पूरेण सवासितम् । पूंगीफलसमायुक्तं सचूरमुखमंडलम् ॥ अथ कर्पूरार्तिक्यम् । मंगले कालिके दुर्गे महिषासुरमर्दिनि । नीराजनं मया दत्तं गृहाण त्वं सुरेश्वरि ॥ अथ पुष्पांजलिः । दुर्गे देवि नमस्तुभ्यं सकलासुरनाशिनि । पुष्पांजलिं मया दत्तां गृहाण त्वं सुरेश्वरि ॥ अथ नमस्कारः । सर्वमंगलमांगल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यंबके गौरि नारायणि नमोऽस्तु ते ॥ अथ प्रदक्षिणा । मया जन्मसहस्रेषु अर्चितं पापसंचयम् । तत्सर्वं नाशयेत्सर्वं प्रदक्षिणा पदे पदे अथ दक्षिणा । पूजयास्तु हाणार्थे दक्षिणा दीयते मया । तां

गृहाण महेशानि पूजां मे सफलां कुरु ॥ अथ प्रार्थना । महिषघ्नि महामाये चामुण्डे पापहारिणि । यशो देहि धनं देहि तव भक्तिं च देहि मे ॥ इति षोडशोपचारपूजनम् । अथवरणं संकल्पं कुर्यात् । ॐ तत्सत् श्रीहंसस्य सच्चिदानंदरूपिणो ब्रह्मणोऽनिर्वाच्यमायाश-क्तिविजृम्भिताविद्यायोगात् कालकर्म्मस्वभावाविर्भूतमहत्तत्वोदि-ताहंकारतृतीयोद्भूतवियदादिपंचकेंद्रियदेवतानिर्म्मितांडकटाहे च-तुर्दशात्मके लोके लीलया शिक्षाकल्पनिघंटुनिरुक्तछंदोज्यो-तिष्याणि वेदानामंगानि मीमांसावैशेषिकन्याययोगसांख्यवेदां-तान्युपांगानि आयुर्धनुर्गांधर्वार्थानुपवेदानैतरेयशतपथसामगोप-

थब्राह्मणान्यधीतऋग्यजुस्सामाथर्ववेदा अद्य ब्रह्मणोऽह्नि द्वितीयप-
रार्द्धे श्रीश्वेतवाराहकल्पे जंबूद्वीपे भारतखंडे आर्यावर्तैकदेशांतर्गते
बृहस्पतिक्षेत्रे कलिप्रथमचरणे श्रीमन्नृपतिविक्रमादित्यराजसंव-
त्सरे शालिवाहनशके तत्सन्मासोत्तमे मासे अमुकमासे अमुकपक्षे
अमुकतिथौ अमुकवासरे ज्ञाताज्ञातकायवाङ्मनस्सकलपापक्षय-
पूर्वकसूर्यादिनवग्रहजन्यजनितजानिष्यमाणअध्यात्मकादित्रयदोष-
निवारणोत्तरशुभफलप्राप्तये च ममैतत्शरीरावच्छिन्नसकलपापनि-
वृत्तिपुरःसरपुत्रपौत्रपरपौत्रादिविवृद्धये च अमुकगोत्रोत्पनोऽहं अमु-
कनामाहं अजीर्णगृहप्रवेशकर्म्मसांगतासिद्ध्यर्थं श्रीगणेशगायत्री-

मृत्युंजयमहालक्ष्मीवास्तुशिवपूजनजपयथासंख्यावाचकत्वेन ब्राह्मणमुखद्वारात्कारयितुं काम एभिः कङ्कणादिभिर्यथानामगोत्रान् ब्राह्मणान् यथानामप्रवरान् यथानामशाखिनः यथानामवेदाध्यायिनः अहं वृणे ॥ वृतोऽस्मीति प्रतिवचनम् ॥ वृतोऽस्मि वृतोऽस्मि। वृतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् । दक्षिणया श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते। इति वृणुयात् ॥ अथ यजमानस्य कंकणबंधनम्। ॐ मानः श ꣳ सो अररुषो धूर्तिः प्रण ꣳ मर्त्यस्य रक्षाणो ब्रह्मणस्पते। ॐ यदा बध्नन् दाक्षायणा हिरण्य ꣳ शतानीकाय सुमनस्यमानाः। तन्म आबध्नामि शतशारदायाऽयुष्मान् जर-

दृष्टिर्यथासमिति पठेत् । इति रक्षाविधानम् ॥ अथाशीर्वादः । ॐ स्व-स्तिन इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु । पयः पृथिव्यां पयः ओषधीषु पयो दिव्यंतरिक्षे पयोधा पयस्वती प्रदिश्यः संतु मह्यम् । विष्णोरराट-मसि विष्णोःश्नप्त्रेस्थो विष्णो स्यूरसि विष्णोर्ध्रुवोसि वैष्णवमसि विष्णवे त्वा । अग्निर्देवता वातो देवता सूर्यो देवता चंद्रमा देवता वसवो देवता रुद्रा देवतादित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पतिर्देवतेंद्रो देवता वरुणो देवता द्यौः शांतिरंतरिक्ष ँ शांतिः पृथिवी शांतिरापः शांतिरोषधयः शांतिर्वनस्पतयः शांति-

विश्वेदेवा शांतिर्ब्रह्म शांतिः सर्वं शांतिः शांतिरेव शांतिः सामा शांतिरेधि सुशांतिर्भवतु । ॐ विश्वानि देवसवितर्दुरितानि परासुव यद्भद्रं तन्न आसुव । इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मती यथा शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् । एतं ते देव सवितुर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे तेन यज्ञमव तेन यज्ञपतिं तेन मामव । मनोजूतिर्जुषतामाजस्यबृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञंसमिमं दधातु । ऋग्वेदस्तु यजुर्वेदः सामवेदो ह्यथर्वणः । ब्रह्म-वाक्यैश्चतुर्नित्यं हन्यंतां तव शत्रवः ॥ अपुत्राः पुत्रिणः संतु संतु सर्वार्थसाधकाः । विप्रहस्ताच्च गृहीयाद्यज्ञपुष्पफलाक्षतान् ॥

चत्वारस्तव वर्धंतामायुः कीर्तिर्यशो बलम् ॥ पश्चात्तिलकं कुर्यात् यजमानं प्रति अनेन मंत्रेण । आयुर्बलं विपुलमस्तु सुखित्वमस्तु सौभाग्यमस्तु विशदास्तव कीर्तिरस्तु। श्रेयोस्तु धर्ममतिरस्तु रिपुक्षयोऽस्तु संतानवृद्धिरभिवांछितसिद्धिरस्तु । चरंतेऽक्षता वर्द्धंते शत्रवः इति आशीर्वादः ॥ ॥ ॥ ॥ ॥

इति कलशस्थापनपद्धतिः समाप्ता ।

नवांगांकेंद्वब्दे वरगुणयुते विक्रमभवे शके वेदाश्वेष्टेंदुमितयिहमासेऽधिकशुचौ ॥ तदा शुभ्रे पक्षे शमनसुतिथाविंदुदिवसे समाप्तेयं श्रेष्ठा विमलकलशस्थापनसृतिः॥ १॥ ॥ ॥ ॥

## कर्मकाण्डग्रन्थाः ।

| नाम. | की. | रु.आ. | ट.म.रु.आ. |
|---|---|---|---|
| २५० श्राद्धविधान भाषाटीका .... .... | क | ०-६ | ०-१ |
| २५१ श्राद्धविवेक इसमें सब श्राद्धकी विधि है | क | ०-१२ | ०-२ |
| २५२ अंत्येष्टीकर्म भा०टी० वार्षिकश्राद्धपर्यंत. | श्री | ०-१२ | ०-२ |
| २५३ आचारार्क .... .... .... .... | (१) | ०-१२ | ०-२ |
| २५४ आचारादर्श .... .... .... .... | (१) | ०-१२ | ०-२ |
| २५५ उपाकर्मपद्धति ( श्रावणी ).... .... | क | -८ | ०-२ |
| २५६ एकोद्दिष्टश्राद्ध प्रयोग .... .... | क | ०-२ | ०-॥ |
| २५७ एकोद्दिष्टश्राद्धपद्धति भाषाटीका .... | क | ०-३ | ०-॥ |
| २५८ कात्यायनीशान्ति .... .... .... | क | ०-२ | ०-॥ |
| २५९ कात्यायनी तर्पण .... .... .... | क | ०-१॥ | ०-॥ |
| २६० कुशकाण्डिकाभाष्य संस्कृत .... .... | क | ०-३ | ०-॥ |
| २६१ क्रियमाणप्रयोगसंग्रहः-( पुराणोक्त ). | हा | ०-१० | ०-१ |
| २६२ जन्मदिन पूजापद्धति.... .... .... | क | ०-२ | ०-॥ |
| २६३ ज्येष्ठाशान्ति .... .... .... .... | क | ०-२ | ०-॥ |
| २६४ तुलसीपूजापद्धति .... .... .... | क | ०-१ | ०-॥ |
| २६५ तुलसीविवाह .... .... .... .... | क | ०-३ | ०-॥ |
| २६६ दशकर्मपद्धति मूल .... .... .... | क | ०-७ | ०-१ |
| २६७ दशकर्मपद्धति भाषाटीका .... .... | क | ०-१० | ०-२ |

| नाम. | की. | रु.आ. | ट.म.रु.आ |
|---|---|---|---|
| २६८ दानसंग्रह सब प्रकारके दानकी विधि है | खे | १-४ | ०-३ |
| २६९ दानचन्द्रिका मूल .... .... .... | क | ०-१० | ०-२ |
| २७० देवऋषितर्पण.... .... .... .... | क | ०-॥ | ०-॥ |
| २७१ यजुर्वेदी आन्हिक ( प्रातःकालसे शयन पर्यन्तके कर्म ) .... .... .... | खे | ०-१२ | ०-२ |
| २७२ नवरत्न विवाहपद्धति भाषाटीका .... | क | १-४ | ०-३ |
| २७३ नवग्रहविधानपद्धति .... .... .... | क | ०-५ | ०-१ |
| २७४ नवग्रहकाण्डी [ नित्यपूजाविधानपद्धति ] | क | ०-२ | ०-॥ |
| २७५ नान्दीश्राद्ध .... .... .... .... | क | ०-२ | ०-॥ |
| २७६ नित्यकर्मपद्धति .... .... .... | क | ०-३ | ०-॥ |
| २७७ नारायणबलि.... .... .... .... | क | ०-४ | ०-॥ |
| २७८ नित्यतंत्र भाषाटीका .... .... .... | श्री | ०-१२ | ०-१ |
| २७९ नित्यकर्मप्रयोगमाला नित्यनियमके ६२ विषय | श्री | ०-६ | ०-१ |
| २८० आह्निकसूत्रावली .... .... .... | ज | १-८ | ०-२ |
| २८१ पञ्चयज्ञ संस्कृत टीकासहित .... | (१) | ०-६ | ०-१ |
| २८२ पञ्चयज्ञ भाषाटीका .... .... .... | क | ०-४ | ०-॥ |
| २८३ पञ्चकशान्ति.... .... .... .... | क | ०-२ | ०-॥ |
| २८४ पार्वणश्राद्ध प्रयोग मूल संस्कृत .... | क | ०-२ | ०-॥ |
| २८५ पार्वणश्राद्ध पद्धति भाषाटीका .... | क | ०-४ | ०-॥ |

| | नाम. | | की.रु.आ. | ट.म.रु.आ. |
|---|---|---|---|---|
| २८६ | प्रतिष्ठामयूख .... .... .... | क | ०-६ | ०-१ |
| २८७ | बृहत्कर्मकांडसमुच्चयमरणकालसेवार्षिकश्राद्धश्री | | ०-६ | ०-१ |
| २८८ | मंत्रमुक्तावली ( मंत्रसंग्रहः ) वैष्णव शिव शाक्त सर्वोपयोगी .... .... | डा | ०-३ | ०-॥ |
| २८९ | प्रेतमञ्जरी भाषाटीका बडी .... .... | क | ०-१० | ०-२ |
| २९० | यज्ञोपवीतपद्धति मूल .... .... .... | क | ०-२ | ०-॥ |
| २९१ | यज्ञोपवीत भा० टी० .... .... .... | क | ०-५ | ०-॥ |
| २९२ | रुद्रविधानपद्धति .... .... .... | क | ०-५ | ०-१ |
| २९३ | लम्बोदरीहवनपद्धति .... | क | ०-४ | ०-॥ |
| २९४ | शरदगणेशपूजा .... .... .... | क | ०-१॥ | ०-॥ |
| २९५ | वासिष्ठीहवनपद्धति .... .... | [illegible] | ०-४ | ०-॥ |
| २९६ | विवाहपद्धति मूल बडा अक्षर .... | [illegible] | ०-८ | ०-१ |
| २९७ | वेदोक्तवा[illegible]तुपद्धति .... .... .... | क | ०-६ | ०-१ |
| २९८ | वैश्यसंध्या .... .... .... .... | क | ०-१ | ०-॥ |
| २९९ | वैवाहपद्यावली ( नोतनी अर्थात् विनतीमें कहने योग्य दोनोंपक्षकेश्लोक भाषाटीका ) | क | ०-१२ | ०-१॥ |
| ३०० | स्वस्तिवाचन पुण्याहवाचन .... .... | क | ०-२ | ०-॥ |
| ३०१ | व्रतोद्यापनकौमुदी .... .... .... | खे | ०-८ | ०-२ |
| ३०२ | शान्तिसार .... .... .... .... | खे | १-४ | ०-२ |
| ३०३ | शिवार्चन पद्धति वेदोक्त .... .... | क | ०-४ | ०-॥ |
| ३०४ | शूद्रविवाह पद्धति .... .... .... | क | ०-२ | ०-॥ |
| ३०५ | सकाम शिवपूजनविधान भा. टी .... | क | ०-४ | ०-॥ |
| ३०६ | सर्वदेवप्रतिष्ठासंग्रह (अन्यत्र नहीं छपा ) | क | २-८ | ०-६ |
| ३०७ | सर्वपूजा बडी .... .... .... | क | ०-२ | ०-॥ |
| ३०८ | समंत्रनवरात्रपद्धतिः सोद्धाराकथासहिताः | क | ०-४ | ०-॥ |
| ३०९ | साधारण गोदानविधि .... .... | क | ०-३ | ०-॥ |
| ३१० | संध्या यजुर्वेदी .... .... .... | क | ०-१ | ०-॥ |
| ३११ | संध्या यजुर्वेदी भाषाटीका .... .... | क | ०-१॥ | ०-॥ |
| ३१२ | संध्यावैष्णवी .... .... .... | क | ०-१ | ०-॥ |
| ३१३ | संस्कारभास्कर यजुर्वेद सब संस्कारोंकी [illegible]धि हैं प्रयोग और मन्त्रसहित .... .... | [illegible] | २-८ | ०-६ |

पुस्तक मिलनेका ठिकाना-

गंगाविष्णु श्रीकृष्णदास,

" लक्ष्मीवेंकटेश्वर " छापाखाना,

कल्याण-मुंबई.